विषादहेतुर्न पितुर्मनीषी यतो मनीषाविषयो बभूव ।
ततो विषीदन्हृषितां स देशे निषेदुषीं मातरमाबभाषे ॥ ८०

तातः कुतः शोचति शोकहेतुः को नाम मातः किमु संप्रवृत्तम् ।
जैवातृकस्याभ्युदये पयोधिः क्षुभ्नाति किं वा बडबानलेन ॥ ८१

पट्टाभिषेके मम ते कुमारौ जैवातृकौ सन्निहितौ न हि स्तः ।
इतीव चिन्ताकुलितो नु तातो न खल्वमिश्रं सुखमङ्गभाजाम् ॥ ८२

कोपादुताहो प्रणयेन वा स्यादुक्तो नु तातः परुषं भवत्या ।
आस्ते विषीदन्हृदये दयार्द्रा प्रसादयैनं मृदुमञ्जुवाचा ॥ ८३

उत्साहहीने नृपतौ विषण्णे को वाभिषेकोत्सवमुत्सहेत ।
अस्तं प्रयातुस्तमसां निहन्तुः को वा न मुह्येदिह जीवलोकः ॥ ८४

इतीव पृष्टा भरतस्य माता धृष्टा सुनिर्लज्जमुवाच रामम् ।
कोपो न कस्मै मनसोऽनुतापो तातस्य ते भूमिपतेरुताहो ॥ ८५

मनोगतं किञ्चन शंसितुं ते भयात्त्वदेषः खलु संशयालुः ।
त्वदप्रियं तत्प्रियमप्यनुक्तं कार्यं त्वया तत्पितृभक्तिभाजा ॥ ८६

वरद्वयं मे मुदितेन राज्ञा व्यतारि देवासुरसङ्गरान्ते ।
तयोरपृच्छं तव वासमेकं वनेऽवनेर्मेऽवनमात्मजस्य ॥ ८७

तदद्य सोऽयं त्वयि रागबद्धः सत्येन पाशेन तथा पिनद्धः ।
शरावमध्यार्पितभृज्यमानधान्याकृतिस्तप्यति तप्तचेताः ॥ ८८

पोतो यदि त्वं पितृभक्तिमान्स्यास्तातं समुत्तारय सत्यवार्धिम् ।
यावत्त्वयि प्रेमभराद्विमुच्य प्रतिश्रुतं न च्यवतेऽपवर्गात् ॥ ८९

वने वस त्वं नव पञ्च राम वर्षाणि राज्यं भरतो भुनक्तु ।
इतीव राजा निजया हि वाचा जिह्वेति वक्तुं त्वयि रागबन्धात् ॥

सन्तप्यमानं पुनरीदृशीभिः सन्तापयन्ती पुनरेव वाग्भिः ।
लोकापवादादपि निर्विशङ्का सा राममेवं निजगाद वामा ॥ ९१

उदारधीरं रघुवंशवीरं वचो न तस्या व्यथयाञ्चकार ।
दृषन्निपातो हि गभीरनीरं पयोधिमालोडयितुं कुतोऽलम् ॥ ९२

वहन्सपत्नीजननीनियोगाश्रिय यथंशस्त्रजमस्तशङ्कः ।
पितुर्वियोगे तु परं विषीदंस्तामेव रामः पुनरेवमूचे ॥ ९३

वने निवासो नगरेऽपि वासो न मे विचारो भरतस्य वा स्यात् ।
पितुर्गुरोस्तस्य हितस्य राज्ञः क ईशितातिक्रमितुं निदेशम् ॥ ९४

पितुर्यथाहं भरतस्तथा मे प्रियो हि मातस्तव मास्तु शङ्का ।
तातस्य वा ते युवराजमेनं विधातुमिच्छा यदि सा ममापि ॥ ९५

भोगेऽतितृष्णा कनकेऽतिवाञ्छा चेतः कदा वा वद मे चकर्ष ।
राज्याभिषेकं पितुराज्ञयाहमूरीचकारेतरथा न मातः ॥ ९६

आयुष्मते दित्सति संप्रतीदं राज्यावनं काननवर्तनं मे ।
मृद्वीकमाध्वीकसुधासमं तन्न गद्यते किं अनकेन हृद्यम् ॥ ९७

जैवातृको भूभरतो न भीतो भीतो न चाहं त्वटनादटव्याम् ।
लोकापवादाद्भवती न भीता तातः कथं सङ्गरभङ्गभीतः ॥ ९८

दूरादपास्यन्पितुराप्तवाचा साम्राज्यलक्ष्मीमचिरांशुतुल्याम् ।
आचन्द्रताराऽर्कमनश्वरं तदाशान्तविश्रान्ति यशस्तितांसुः ॥ ९९

स्वर्गापगां तामपवर्गदात्रीमुग्रैस्तपोभिः समुपास्य भर्गम् ।
गां प्रापयद्यः सुगतिं पितॄन्स्वान्भस्मीकृतान्कापिलकोपवह्नौ ॥ १००

तस्यान्ववाये किमहं न जातो भ्राता न किं मे भरतो नु राज्ञः ।
नो चेदलं पूरयितुं प्रतिज्ञामल्पीयसीं धिक्कुलपांसनं माम् ॥ १०१

तातं समाश्वासय तातवाक्यैर्वत्सं समाह्वापय वत्सलं मे ।
पट्टाभिषेकोत्सवमस्य साक्षात्पश्यामि नेत्रोत्सवमम्ब तावत् ॥ १०२

इतीव रामे विजितार्थकामे गुणाभिरामे वनमेतुकामे ।
सा पूर्णकामापि किमाप्तुकामा भूयोऽपि रामं तुदति स्म वामा ॥ १०३

पित्रोर्विधेयत्वमनन्यदृष्टं क्षात्रं च सौभ्रात्रमदर्शि वाचा ।
श्रुतं सदाचार इवानुयायात्क्रियापि वाचं तव मा चिराय ॥ १०४

उक्तेन किं मे बहुभाषितेन यावन्न निर्यास्यसि काननं त्वम् ।
तातस्तवोत्थास्यति राम तावत्स्नानाय पानाय न वाशनाय ॥ १०५

श्रवणपुटकठोरैरित्थमुन्मुक्तलज्जं
परुषतरवचोभिर्नर्महृन्मर्मभिद्भिः ।
अपि भरतजनन्यामुक्तवत्यामकस्मा-
त्त्ववहत इव शाखी भूभृदुर्व्यामपप्तत् ॥ १०६

सरभसमथ रामस्तातमुत्थाप्य ताव-
च्छिशिरसमुपचारैस्तं समाश्वास्य सद्यः ।
विपदि विधृतधैर्योऽप्यात्महेतोरकस्मा-
द्व्यसनमुपगतोऽसावित्यभून्म्लानशोभः ॥ १०७

क्षणमपि जनकं प्रणम्य रामो निजरुचिराननदर्शनोत्सुकं च ।
जनकसविधवर्तिनं स्वमर्धक्षणमपि तां जननीममर्षमाणाम् ॥ १०८

आपृच्छ्य तौ सविनयं व्यथितं च हृष्टां
निर्याय मातृनिलयं नयवर्त्मयायी ।
आत्माभिषेकसुमहोत्सवदर्शनोत्कां
तामाससाद जननीं जननीतिहृद्याम् ॥ १०९

इति श्रीमद्वाधूलकुलजलधिकौस्तुभस्य श्रीमन्मार्गसहायशास्त्रिणस्तनू-
जस्य श्रीमत्सुब्बाम्बागर्भशुक्तिमुक्तामणेः **श्रीसुन्दरेश्वरस्य**
कृतौ सुन्दररामायणकाव्ये
तृतीयः सर्गः

## ॥ अथ चतुर्थः सर्गः ॥

पतिपुत्रहिताभिलाषिणी प्रयता कोसलराजनन्दिनी ।
उपवासकृशाल्पभूषणा भगवद्ध्यानविधौ परायणा ॥ १

विनयावनतं महाशयं तनयं सा नयवर्त्मयायिनम् ।
बडबेव मुदा समागतं नवसूताभिययौ किशोरकम् ॥ २

प्रियतामृतवर्षिचक्षुषा स्नपयन्ती सुतमाशिरस्पदम् ।
गिरमादरणी दरस्मिता वदति स्मेति सुधावधीरिणीम् ॥ ३

उपवेशयिता नृपासने जनकस्त्वामचिराय शोभन ।
भगवानरुणो नभःस्थलं ह्यधिरूढः खलु किं चिरायसे ॥ ४

ननु सन्निहितो विनिश्चितो ह्यभिषेकावसरस्तवात्मज ।
शतमन्मथसुन्दरेण ते वपुषा भूषणमाशु भूषय ॥ ५

अथवा गुणभूषणस्य ते विदुषोऽलंक्रियया किमन्यया ।
सुगुणाभरणं न केवलं तव शोभां तु कुलस्य पुष्यति ॥ ६

अथ दाशरथिर्ह्युदारधीरिति मातुर्वचनं निशम्य सः ।
द्विगुणीकृतदुःखमात्मनि प्रतिवाचं विनियम्य चाददे ॥ ७

मुदिते जनयित्रि मत्कृते किमहं भाग्यविपर्ययं ब्रुवे ।
गजराजमिवाधिरोपिता विधिनाधः पुनरेव पातिता ॥ ८

महती न हि वेत्सि मत्कृते स्थविरायास्तव भीतिरुत्थिता ।
तरुणीमणिरप्ययोनिजा विरहं सा सहते कथं मम ॥ ९

ननु दूरतरो हि राघवः सितवालव्यजनातपत्रयोः ।
मकुटाभरणे नृपासने विषये कैव कथाभिषेचने ॥ १०

धृतचीरजटं सवित्रि मां ननु तातः प्रहिणोति दण्डकाम् ।
चतुरन्तमहीमहीनधीश्चतुरङ्गां भरताय दित्सति ॥ ११

मधुमूलफलाशनैरहं मुनिवृत्तिर्नव पञ्च वत्सरान् ।
विजने निवसामि कानने किमनेनासनभोजनेन मे ॥ १२

इति रामवचो मनस्विनीहृदयेऽभूत्क्रकचायितं तदा ।
सहसा सुतबाष्पबिन्दुभिर्गजभग्नेव पपात वल्लरी ॥ १३

अथ सा शिशिरोपचारतः कथमासाद्य चिराय चेतनाम् ।
विदितामितदुःखवेदना हृदि विद्धा कुररीव रोदिति ॥ १४

ननु वत्सल वत्स भूयसा तपसा त्वं विधिना प्रसेदुषा ।
मम पापिनि गर्भसंपुटे जनिमापादि वयस्यनादिमे ॥ १५

अयि निर्दय भागधेय मां ननु दुःखापयितुं प्रसेदुषः ।
चुलुके सुफलं प्रदाय मे पुनरादानमिदं न साम्प्रतम् ॥ १६

भुवि धन्यतमा वधूषु सा ननु वन्ध्या खलु निर्विचारिणी ।
सकृदस्त्यनपत्यताव्यथा न तु तस्याः सुतविप्रयोगजा ॥ १७

गमिताः क्षणवद्धि वत्सरास्तव जन्मावधि सप्तविंशतिः ।
क्षणमप्यनवेक्ष्य ते मुखं ननु मे कल्पशतत्वमेष्यति ॥ १८

त्वयि सन्निहितेऽप्यनेकधा न सपत्न्या न तया निराकृता ।
मरणं गणय ध्रुवं मम त्वयि मेऽभाग्यतया प्रवासिते ॥ १९

न शुभं न सुखं कदापि वा खलु दृष्टं पतिपौरुषे मया ।
तनयेऽयुवती शुभायतिं त्वयि पश्येयमिति स्थितं चिरात् ॥ २०

वितथं मम दुश्चरं तपो वितथाहो मम धर्मकारिता ।
विहितं न हितं किमीहितं न कृतं देवगुरुद्विजन्मनाम् ॥ २१

बहुधा कृतमन्यजन्मनि प्रबलं दुष्कृतमज्ञया मया ।
करसन्निहितं सुखं यतः सुतजन्यं विधिराचकर्ष मे ॥ २२

स्वसपत्न्यसकृद्विमानना ननु पत्युः प्रणयावधीरणा ।
सदपत्यवियोगवेदना प्रमदानामविषह्ययातना ॥ २३

हृदयं मम नूनमायसं ननु राम ह्यथवाजरामरम् ।
अवकर्ण्य यतो न भिद्यते वनसञ्चारकथामनेकधा ॥ २४

अभवत्खलु राम जन्म मे सुखदूरं बहुदुःखपूरितम् ।
व्यसनानुभवाय केवलं मयि चैतन्यमिदं समाहितम् ॥ २५

मरणं न हि विद्यते यतस्त्ववकाशो न यमक्षये मम ।
अनृतं न वचो महात्मनां यदकाले न मृतिर्भवेदिति ॥ २६

तपसाधिगतं महीयसा तनयं सप्रियताभिवर्धितम् ।
वनभाजमनागसं शिशुं कलयन्त्याः किमु जीवितेच्छया ॥ २७

यदि मातरि भक्तिरस्ति ते पितरीवादिमदैवते मयि ।
त्वमनन्यगतिं कुमार मां नय सत्रा भवतैव दण्डकाम् ॥ २८

ननु यास्यासि चेदपास्य मामटवीं राम विषादनार्दिताम् ।
प्रसभं त्वहमद्य पश्यतस्तव नूनं विसृजामि जीवितम् ॥ २९

इति कोसलराजनन्दिनी विलपन्ती करुणं मनस्विनी ।
अनलं नवनीतकोमलं हृदयं द्रावयतुं तनूभुवः ॥ ३०

स पितुर्वचनानुपालने प्रतिषिद्धोऽपि निबद्धमानसः ।
जननीमनुजं च सान्त्वयन्नथ रामः पुनरेवमूचिवान् ॥ ३१

ननु मातरवैमि दैवतं भवतीमादिममात्मजादरे ।
प्रथमं पुनराश्रुतं मया जनयित्रे विपिनान्तवर्तनम् ॥ ३२

अतिवर्तितुमम्ब भूपतेः कथमीशे वद शासनं पितुः ।
ननु भूमितले पितुर्वचो विदधानः क्व नु को नु हीयते ॥ ३३

ननु कण्डुमहर्षिणा हता विदुषा गौरपि किं न विश्रुता ।
जमदग्निसुतेन रेणुका जननी किं परशोरलावि नो ॥ ३४

सगरस्य पितुः पुराज्ञया किमु नास्मत्कुलजैश्च सागरैः ।
निखनद्भिरिलामबालिशैर्महती जीवततिर्निषूदिता ॥ ३५

बहुभिश्च महद्भिरीदृशैरपि विद्वद्भिरकार्यकारिभिः ।
विपुला खलु कीर्तिरार्जिता पितुराज्ञापरिपालनोत्थिता ॥ ३६

धृतिसेतुनिपातिभिर्घनैस्तदलं ते नयनान्तवारिभिः ।
ननु साधयितुं सवित्रि मामनुमन्यस्व समीहितं पितुः ॥ ३७

तव जीवति जीविताधिपे ननु मातः पतिदेवते शुभे ।
कथमर्हसि तं विसृज्य मामनुगन्तुं विधवेव भामिनी ॥ ३८

व्रणितं भरताम्बया भृशं परुषालापशिलापरिक्षतैः ।
तदुपेक्षितुमौचिती न ते सुतशोकग्लपितं पितुर्वपुः ॥ ३९

नव पञ्च च वत्सरानहं गमयित्वा सहसा यथा वने ।
पुनरेव नमामि ते पदं कुरु मे स्वस्त्ययनानि भाविनि ॥　४०

इति सा तनुजेरितं वचस्त्ववकर्ण्य श्रुतिसाम्प्रदायिकम् ।
तनयानुगतौ विनिश्चितां मतिमह्नाय तदा न्यवारयत् ॥　४१

जननीविहिताः पुनः पुनः प्रतिगृह्याशु सुमङ्गलाशिषः ।
अनुनेतुमयोनिजामथो रघुवीरो व्रजति स्म सानुजः ॥　४२

दयितामभिषेकवार्तया मुदितामुग्रमहद्वनावनौ ।
सकलेन्दुमुखीमधोमुखः कथयामास निवासमात्मनः ॥　४३

अनयाप्रियवार्तया प्रियामभिकस्तां परिदूनमानसाम् ।
मृदुभिर्वचनैः स सान्त्वयन्निति वाचं निजगाद राघवः ॥　४४

दयिते पितुराज्ञयाधुना विजनं यामि वनं भयानकम् ।
चतुरर्णवमेखलामिलां भरतः शास्यति पुष्कलामिमाम् ॥　४५

उपवासपरा भवानघे मयि याते सति दण्डकावनम् ।
अथवा नियताहृतिः सदा गुरुदेवद्विजपूजने रता ॥　४६

श्वशुरौ तव दुःखकर्शितौ समुपास्यौ स्थविरौ दिवानिशम् ।
सुतसोदरवत्पतिव्रते भरतं शत्रुजितं च भावय ॥　४७

अभिमानवती निरादरा भरते राजनि मा कदापि भूः ।
प्रभवः खलु सम्यगादृता ह्यनुगृह्णन्त्यनुजीविनो जनान् ॥　४८

सुगुणान्मम मोहतः प्रिये भरताग्रे ननु मा च कीर्तय ।
नृपतेर्हि सुखावहं श्रुतेर्न परेषामनुभावकीर्तनम् ॥　४९

पुरुषस्य कदापि कस्यचित्त्वमलीकं मनसापि मा स्मर ।
पुनरागमवासराणि मे गणयन्ती निवसेह शोभने ॥ ५०

इति सा दयितेन भाविनी विहिता राघवधर्मचारिणी ।
प्रणयान्मृदुमञ्जुभाषिणी पतिमूचे वचनं मनस्विनी ॥ ५१

अयशस्यमनर्हमीदृशं वचनं ते श्रुतिपारदृश्वनः ।
अभिधातुमसाधु साधुवत्किमु राजन्यकुमार साम्प्रतम् ॥ ५२

जनको जननी सुतः स्नुषा सुकृतानि स्वकृतानि भुञ्जते ।
सहधर्मचरी पुनः सदा ननु पत्नी पतिभाग्यभागिनी ॥ ५३

गुरुणाभिहितस्तवाधुना वनवासस्तु तदस्तु शोभन ।
लिखितः स पितामहेन मे जननीगर्भपुटे ललाटके ॥ ५४

ननु पाणिनिपीडनादितो भवता त्वत्सुखदुःखभागिनीम् ।
त्वदनन्यगतिं कथं नु मां यतसे हातुमिहासहायिनीम् ॥ ५५

भवता सह जीवितेश मामनुयातुं सहधर्मचारिणीम् ।
दययानुगृहाण कौमुदी न हिमांशुं खलु जातु मुञ्चति ॥ ५६

शशिना रहितेव शर्वरी जलदेनेव विनाचिरप्रभा ।
ललनापि सती पतिं विना न हि शोभामुपयामि जात्वपि ॥ ५७

तनयाश्वपतेः पतिव्रता ननु भर्त्रा खलु सानपायिनी ।
उदितास्तमितं रविं यथा पतिमेवानुगता सुवर्चला ॥ ५८

बहुदोषमिति त्वयोदितं विजनं काननमेवमस्तु तत् ।
बहुदोषतरं नु काननाद्विरहिण्याः पुरवर्तनं मम ॥ ५९

विजनं वनमेव दुर्गमं पतिवत्न्याः प्रमदावनायते ।
सुगमोपवनं मनोरमं विरहिण्याः खलु काननायते ॥ ६०

वनमूलफलानि कानिचित्स्वयमाहृत्य ददासि मे यदि ।
बहु वाल्पतरं तदेव मे सकलं कान्त नवामृतोपमम् ॥ ६१

विपिनान्तपथे सह त्वया ननु यान्त्याः कुशकाशकण्टकाः ।
नवपल्लवतल्पकोमलाः पदयोः स्पर्शसुखा भवन्ति मे ॥ ६२

शयितं यदि कोमले मया नववैदूर्यनिभे सह त्वया ।
सरसालपितेन शाद्वले किमतः स्वर्गसुखं समाधिकम् ॥ ६३

भवता सह मे भयानके विपिने वा वसतिः सुखायते ।
त्रिदिवेऽपि पुनस्त्वया विना ननु सा मास्तु कदापि शोभन ॥ ६४

सहितस्य तवापि कान्तया वनवासेन सुखाय भूयते ।
अमितव्यसनामयाविनः सुकलत्रं परमौषधं खलु ॥ ६५

शतमन्मथकोटिसुन्दरं शतपत्रायतकान्तलोचनम् ।
शशलाञ्छनसोदराननं शशिसूर्याग्निसमानतेजसम् ॥ ६६

मधुरं मधुराभिभाषिणं हरिविक्रान्तविलासगामिनम् ।
क्षणमप्यनवेक्ष्य वल्लभं रमणी का मरणं वृणोति नो ॥ ६७

भवतापि कदानपायिनीं ननु ते कान्त मनोविनोदिनीम् ।
उचितं तव मां वियोगिनीं किमु हातुं सहधर्मचारिणीम् ॥ ६८

इति साध्व्यनुरूपया गिरा पतिपादाङ्गुलिपातितेक्षणा ।
तदनुग्रहभावकाङ्क्षिणी पतिमुक्त्वा विरराम जानकी ॥ ६९

प्रियया समुदीरितं प्रियः स समाकर्ण्य मनःप्रियं वचः ।
अनलं प्रतिरोद्धुमात्मना सह कान्तारनिवासलालसाम् ॥ ७०

अथ तामविदूरवर्तिनीमुपवेश्याङ्कतले मनस्विनीम् ।
परिरभ्य दृढं मनःप्रियामिदमूचे वचनं स राघवः ॥ ७१

दयिते वचनं त्वयोदितं ननु सर्वेन्द्रियमोहनं हितम् ।
अबला पतिभक्तिगर्विता त्वदृतेऽन्यालपितुं न कल्पते ॥ ७२

वचनं तव युक्तिसंहितं बहुमानार्हमवैमि हे प्रिये ।
गुणवत्सु गुणा हि केवलं न च लिङ्गं न वयः समीक्ष्यते ॥ ७३

बिसतन्तुतनीयसी तनुर्न सहेतातपखेदमध्वनि ।
अनुयापयितुं हि नोत्सहे विपिनं त्वामत एव नान्यथा ॥ ७४

तनुगात्रि शिरीषकोमलं वपुरायासयितुं विचिन्तया ।
अपि निःश्वसितैरशीतलैर्वदनं म्लापयितुं न चार्हसि ॥ ७५

दयिते यदि निश्चिता मतिर्वनवासे सहवासकारिणी ।
परिकर्म समारभस्व यद्वनवासक्षममाहितक्षणा ॥ ७६

इति सा दयितेन भाषिता मुदिता साश्रितविप्रकोटये ।
सुबहूनि वसूनि भूषणान्यदिशद्भर्तृहिताभिलाषिणी ॥ ७७

पितरं पुनरप्यनन्तरं नृपमामन्त्रयितुं स राघवः ।
अचिराय ययावयोनिजासहितो राजगृहं ससोदरः ॥ ७८

स हि तत्र समाहृतं मुदा द्रुमचीरं भरताम्बया स्वयम् ।
उचितो हि दुकूलवाससां परिधत्ते खलु हन्त कर्कशम् ॥ ७९

अथ केकयराजकन्यकाहृदयात्कर्कशवल्कलेन सा ।
नवपल्लवकोमलाङ्गका बत सीता परिधापितापि हा ॥ ८०

जननीजनकास्रवास्रवैः प्रणतावुक्षितकाकपक्षकौ ।
हननाय वनाय चासतां निरगातामवनाय तौ सताम् ॥ ८१

क जानभवनेऽवनीपतेः क नु वासो विपिने भयानके ।
विपरीतफलप्रदायिनी गहनाहो खलु कर्मणो गतिः ॥ ८२

अनुरागभरानुगच्छतस्तमसातीरभुवि प्रतार्य तौ ।
पुरवासिजनानगच्छतां जवनाश्वेन रथेन जाह्नवीम् ॥ ८३

भुवनत्रितयैकपावनीं महदुत्तुङ्गतरङ्गमालिनीम् ।
भजतामपवर्गदायिनीं भवभीतेर्विलयं वितन्वतीम् ॥ ८४

भवमौलिजटाविहारिणीं प्रणतक्लेशविनाशकारिणीम् ।
उपगम्य समुद्रगामिनीं रघुवीरो हिमशैलनन्दिनीम् ॥ ८५

बहु तत्र गुहेन मानितः सकलत्रः सह लक्ष्मणेन च ।
विनिवर्त्य सुमन्त्रमाश्रमं स भरद्वाजमुनेरुपेयिवान् ॥ ८६

भरताग्रजलक्ष्मणौ मुनेर्मुनिवेषौ समपेतकल्मषौ ।
विनतौ नतलोकपावनौ चरणौ पस्पृशतुः सभूसुतौ ॥ ८७

विहितातिथिसत्कृतिः कृती सुकृती दाशरथिर्ह्युदारधीः ।
नगमद्भुतशृङ्गमभ्यगान्मुनिनादिष्टसमीपवर्त्मना ॥ ८८

सुबहुमूलफलं सरसोदकं विविधफुल्ललतातरुशोभितम् ।
मदगजानुसृतं मृगसेवितं पिकमयूरगणैर्मुखरीकृतम् ॥ ८९

विकचपङ्कजहल्लकशोभिता समदसारसहंसविनादिता ।
तनुतरङ्गवती खलु यत्र सा स्रवति हेमवती विमलोदका ॥ ९०

अविरताहुतिगन्धमनोरमा ललितपल्लवपुष्पफलद्रुमाः ।
विगतकल्मषमौनिजनाश्रमाः कति न सन्ति भवश्रमविश्रमाः ॥ ९१

तादृशे सुरुचिरे शिलोच्चये रम्यमावसथमारचय्य सः ।
सार्धमर्धवपुषानुजन्मना राघवो हृदि निवासमादधे ॥ ९२

सीतया सह मनोऽनुकूलया लक्ष्मणेन च निदेशवर्तिना ।
चित्रकूटकटके सुखं वसन्नास्मरद्धि पितरं न मातरम् ॥ ९३

तेन पञ्चशरसुन्दरेण सा राघवोऽपि रतिसौम्यया तया ।
तावुभौ सरसभाषिणौ मिथः सङ्गतौ मुदमवापतुः पराम् ॥ ९४

इति श्रीमद्वाधूलकुलजलधिकौस्तुभस्य श्रीमन्मार्गसहायशास्त्रिणस्तनू-
जस्य श्रीमत्सुब्बाम्बागर्भशुक्तिमुक्तामणेः श्रीसुन्दरेश्वरस्य
कृतौ सुन्दररामायणकाव्ये
चतुर्थः सर्गः

## ॥ अथ पञ्चमः सर्गः ॥

तनयेऽभिषेकविमुखे प्रियया सह चित्रकूटकटकाधिगते ।
व्यसनोदधौ निरवधावपतद्वसुधाधिपस्तदनु पङ्क्तिरथः ॥ १

तरिमुत्तरीतुमनवाप्य विभुर्निममज्ज दुःखजलधौ विवशः ।
ददृशे किलान्धतमसे निखिलं भुवनं निमग्नमिव भूमिपतेः ॥ २

परिसान्त्वितोऽपि बहुशः सचिवैर्मनसो न शर्म लभते नृपतिः ।
प्रियविप्रयोगविधुरो हि कथं प्रियदर्शनावधि लभेत शमम् ॥ ३

स्मरता नृपेण तरुणे वयसि स्वकृतं महद्दुरितमज्ञतया ।
इति कोसलेशदुहिताभिहिता समदुःखभारनमिता दयिता ॥ ४

रचितस्तवाञ्जलिरयं दयिते ननु मन्युराविशतु मा भवतीम् ।
विजने विवासितवता विपिने तनयं निरागसमसाधु कृतम् ॥ ५

अयि केकयेशदुहितुर्वदनद्युतिविभ्रमभ्रामिपरिभ्रमता ।
अविजानता स्मरमदान्धतया समपादि दुस्सहदुरन्तदशा ॥ ६

मृगयाविहारकुशलेन मया गजलिप्सया वनमहीमटता ।
जलमुद्धरन्सरिति कोऽपि वटुर्ननु शब्दवेधविदुषा निहतः ॥ ७

मिथुनं तदेकसुतमन्धमथो निहतं निशम्य तनयं करुणम् ।
सुचिरं विलप्य विससर्ज वपुर्मरणं ममाप्यशपदात्मसमम् ॥ ८

मुनियुग्मशापफलकाल इति प्रतिभाति संप्रति समापतितः ।
न कृतं विनश्यति फलेन विना सुकृतं तदस्तु विपरीतमुत ॥ ९

नन्वु पुत्रसौख्यमनुभोक्तुमहं न हि दुर्विधिर्मम ममर्ष चिरम् ।
किमहं करोमि न मयात्महितं पुनरन्यजन्मनि सुकर्म कृतम् ॥ १०

सुकृती स एव मनुवंशविभुः सुतसौख्यमाप्य तरुणे वयसि ।
अवतार्य राज्यधुरमस्य भुजे तपसे वनाय चरमे व्रजति ॥ ११

मम तावदीदृशसुखानुभवो विधिना न्यरोधि बलिनाघृणिना ।
हरिचन्दनभ्रमवती निभृतं विषवृक्षमाश्रितवती भवती ॥ १२

विलपन्नितीव जगतीकमनस्तनयं तदेकहृदयः कलयन् ।
वचसा तमेव निगदञ्शनकैरसुभिर्निशीथसमये विजहे ॥ १३

हृदयङ्गमैः श्रुतिसुखैः सलयैरनवद्यगीतनिकरैर्मधुरैः ।
स्तुतिपाठकास्तमुपतस्थुरुषस्यनवद्यहृद्यचरितं नृपतिम् ॥ १४

नगवर्तिनः परभृतप्रमुखा भृतशारिकाशुकशिखिप्रमुखाः ।
नगमुत्पतन्ति परितः सरवा निशि सुप्तिसौख्यमनुयोक्तुमिव ॥ १५

निशि पीतबद्धनववत्सतरा पुनरेव पाययितुमात्तरवा ।
असकृत्स्रवन्निबिडपीनकुचा गृहधेनुराह्वयति वत्सामिव ॥ १६

निशिताः करा अपि न तिग्मरुचेः प्रभवन्ति जागरयितुं नृपतिम् ।
दयिताकदुष्णमृदुमुग्धकरः किमलं विधातुमपनिद्रममुम् ॥ १७

सुतशोकभिन्नहृदयोपयमं गतवानितीव विगतासुरसौ ।
रुदितेन शोकबहुलीभवता प्रथयाञ्चकार वनिताजनता ॥ १८

दुहितुस्तु कोसलपतेरमितां किमहं ब्रवीमि बहुकष्टदशाम् ।
जगदेकवीरतनयेन यतः प्रभुणा वियुज्य युगपद्ध्रियते ॥ १९

मनुजाधिपस्त्वपगतासुरसाविति संस्कृतेरनुचितोऽविधिना ।
अनुयायिभिर्भरतमात्तजवैर्द्रुतमाजुहाव स विधेस्तनुजः ॥ २०

प्रविशन्निरस्तसुषमं स पितुर्भवनं परेतभवनेन समम् ।
अनवेक्ष्य तत्र जनकं जननीसदनं विवेश सहजेन समम् ॥ २१

प्रणिपत्य मातरमजिह्ममतिः पितुरन्वयुङ्क्त कुशलं कुशलः ।
क्व नु राघवस्तदनुजः क्व नु सा कुलपावनी जनकराजसुता ॥ २२

ननु ते पितुर्वचनगौरवतः सह लक्ष्मणेन सह भूसुतया ।
द्रुमचीरबद्धवपुरात्तजटो विजनाय जात स वनाय गतः ॥ २३

जनकस्तवापि जगतीकमनः परलोकमाप तव भाग्यवशात् ।
अनुभोक्तुमर्हसि यथेष्टमिदं त्वसपत्नमृद्धमाधिराज्यपदम् ॥ २४

निरपत्रपात्महितमात्रपरा पथि दुर्निमित्तपरिदूनहृदम् ।
इति केकयाधिपसुता भरतं प्रतिवक्ति पापहृदया परुषम् ॥ २५

अहितं तया हितमिवाभिहितं महितो निशम्य भरतोऽपि वशी ।
बहुकोपशोकपरवानचिराज्जननीतिहीनजननीमवदत् ॥ २६

अविमृश्यकारिणि किमर्थमिमं कृतवत्यनर्थमसदर्थपरे ।
अतितुङ्गवर्तिफललालसया तरुरप्यलावि बत मूढधिया ॥ २७

कुलपांसनि त्वमपकीर्तिमिह व्रज रौरवं पुनरमुत्र चिरम् ।
पतिघातिनि त्वमपवर्गपदं जननीपदं च मम मा स्म गमः ॥ २८

न हि धार्मिकस्य तनयाश्वपतेः कुलदूषिणी निशिचरी जनिता ।
विपिने रसालतरुषण्डयुते विषवल्लरीव वनदुर्ललिता ॥ २९

ननु राघवस्तव कृते विपिनं जनकः पितुर्वनमपत्यकृते ।
व्रजति स्म तत्तदुभयोश्च कृते निभृतं विशामि वनमन्यतमम् ॥ ३०

इति गर्हयन्स जननीनिलयान्निरयादिव प्रकुपितो निरयात् ।
पतिपुत्रशोकभरसंक्षुभितामथ राममातरमुपागतवान् ॥ ३१

लवनादिवाश्रयतरोर्व्रततीमथवोपरक्तसकलेन्दुकलाम् ।
स दशान्तरान्तरितसुन्दरतां कलयाञ्चकार पतिशोकपराम् ॥ ३२

समदुःखभारविधुरो भरतः सलिलोद्धृतामिव सरोजलताम् ।
स निशाम्य रामजननीममितप्रथमानशोकपरवानवदत् ॥ ३३

पितृहीनजीवितमधन्यतमं पितृतुल्यपूर्वजविहीनमिदम् ।
त्रिजगद्विगर्हितमकीर्तिकरं ननु धारयामि जनयित्रि कथम् ॥ ३४

रघुवंशकेतुमिनवंशमणिं जगदेकवीरमभिरामगुणम् ।
विपिनेऽपि राममनुगच्छति यः स हि लक्ष्मणो जगति धन्यतमः ॥

शतमन्मथाकृतिमजातरिपुं शशिसूर्यतेजसममेयबलम् ।
शरदिन्दुकान्तिवदनाम्बुरुहं सरसीरुहायतविशालदृशम् ॥ ३६

मृदुमुग्धहासलसदोष्ठपुटं मृदुमञ्जुभाषिणमुदारमतिम् ।
अनपायिनी तमनुगच्छति या जनकात्मजा जगति धन्यतमा ॥ ३७

ननु केवलार्थपरया विगतत्रपया जगत्त्रयविगर्हितया ।
प्रहिता ययार्यचरणा विपिनं जनयित्रि सा भवतु मा जननी ॥ ३८

अहमार्यराममधुनैव वनात्पुनरानयामि हि मनोजवसम् ।
पितरं निवर्तयितुमस्य वनात्प्रभवामि तावदहमम्ब कथम् ॥ ३९

इति पूज्ययापि स तयाग्रजनेर्वनवासकारणमिवात्मनि यत् ।
अधिशङ्कितं तदुदितैः शपथैर्निरकासयत्तदनु तद्धृदयात् ॥ ४०

पितृपूर्वजव्यसनदूनमनाः परिसान्त्वितः क्षणमथर्वविदा ।
निरवर्तयत्स परलोकजुषः पितुरौर्ध्वदैहिकविधिं विधिवत् ॥ ४१

स चतुर्दशेऽहनि सुतेन विधेर्नृपतिर्भवेति बहुधाभिहितः ।
इररीचकार न हि चोरहृतं धनमन्यभोग्यमिव राज्यपदम् ॥ ४२

अनुजोपभोगसुभगा न भवेज्जननीसमार्यकमनी धरणी ।
इति मातृसङ्गमनपापभयादिव भूपतित्वमवधीरितवान् ॥ ४३

अथवागृहीतवसुधारमणीकरपल्लवे दशरथाग्रसुते ।
परिवेत्तृतादुरितभीरुरसौ स पतिंवरामपि निरस्यति ताम् ॥ ४४

विपिनान्निवर्तयितुमार्यमसौ विपिनेऽथवा तमनुसाधयितुम् ।
सहसा सपौरचतुरङ्गबलः स हि निर्जगाम सह मन्त्रिजनैः ॥ ४५

अवधीरितापि जनपुण्यवशात्स पुनः प्रसीदति किलेति धिया ।
अकृताश्रया तमनुगच्छति सा विपिनाय यान्तमपि राज्यरमा ॥ ४६

अगृहीतराज्यकमलोऽपि यतः स रराज राजकलयाकलितः ।
सकलैरमानि खलु पौरजनैर्भविता स एव विभुरित्यचिरात् ॥ ४७

जितवैनतेयपवना जवना रघुनाथमीक्षितुमिवात्तजवाः ।
रथयोजिता अपि हया ह्यनयन्नमरापगातटभुवं भरतम् ॥ ४८

भरतो निषादपतिनादरिणा गुहनामकेन मधुमांसझषैः ।
सदकारि तत्र सह पौरजनैरनुयायिभिः सचतुरङ्गबलैः ॥ ४९

विहितावगाहननिवापविधिं विनिवेदितार्यकुशलं भरतम् ।
तरिभिर्निषादपतिरम्बुमतीं समतारयत्सुरतरङ्गवतीम् ॥ ५०

त्वरितमग्रजदर्शनकौतुकान्मधुरया प्रमिताक्षरया गिरा ।
स भरतो विनिवर्त्य गुहं ततः स्वपथमन्वरुधत्स्वजनैः समम् ॥ ५१

इति श्रीमद्वाधूलकुलजलधिकौस्तुभस्य श्रीमन्मार्गसहायशास्त्रि-
णस्तनूजस्य श्रीमत्सुब्बाम्बागर्भशुक्तिमुक्तामणेः श्रीसुन्दरे-
श्वरस्य कृतौ सुन्दररामायणकाव्ये
पञ्चमः सर्गः

## ॥ अथ षष्ठः सर्गः ॥

ततो भरद्वाजमृषिं सिषेविषुः सुतं पुरोधाय पुरोधसं विधेः ।
सुदूरविन्यस्तबलो महाबलः पदातिरेवाश्रमभागमभ्यगात् ॥ १

स तत्र मूर्तीकृतसत्रपावकं त्रिलोकराशीकृतपुण्यसञ्चयम् ।
यथाथ वा धाम परं नु वैधसं ददर्श तं मानधनस्तपोधनम् ॥ २

स तेन पृष्टो भरतो महर्षिणा निरामयं पौरजनेषु बन्धुषु ।
जगाद धीरोऽपि हि केकयात्मजासुतत्वमापद्य विलज्जिताननः ॥ ३

तपोमहिम्ना भगवन्महीयसा भवादृशां चेतसि निश्चलेऽमले ।
करादृतादर्शतले यथा जगद्विचेष्टितं मूर्छितमेव तत्क्षणे ॥ ४

तथापि पृच्छा भवतो महामुने मनस्यहो विस्मयमातनोति मे ।
गुणोऽथ वायं सहजो महात्मनां स्वकीयसामर्थ्यनिगूहनं सताम् ॥ ५

निमज्ज्य मातापितरौ स राघवो वनं जगाहे खलु शोकसागरे ।
स पुत्रशोकेन गुरुर्दिवं गतो ह्यभूदहो राज्यमराजकं मुने ॥ ६

समर्पिता पङ्क्तिरथेन भूभृता निरादृता तत्प्रथमाङ्गजन्मना ।
पतिंवरा सा तदनन्यकामिता निराश्रया राज्यरमा विषीदति ॥ ७

दिवं गते पङ्क्तिरथे महीपतौ वनं गते राजसुते च राघवे ।
सुतेन पत्या च वियोजिता पुरी विभाति मातेव न मे गरीयसी ॥ ८

कृताकृताभिज्ञ विरामलक्ष्मणाशिवारवाक्रान्तनितान्तभीषणा ।
सितेतराराजकरावलम्बिता विभाति साकेतपुरी निशेव सा ॥ ९

हिताहितज्ञानलवेन दुर्विधा दुराशया केकयवंशपांसनी ।
निदानमासामपथावलम्बिनी विपत्ततीनां जननी ममैव सा ॥ १०

वनादहं राघवमानिनीषुः पुरीमयोध्यामिनवंशकेतुम् ।
व्रजामि पौरैः सह बन्धुवर्गैरसौ महर्षे वसति स्म यत्र ॥ ११

इति भारतीमनवगीतभारतीमवकर्ण्य कर्णमधुरां तपोनिधिः ।
हृदये प्रशस्य तमनिन्द्यपौरुषं निजगाद वाचमिति राजनन्दनम् ॥ १२

विनयानतस्य भरतानुजस्य ते ननु राघवस्य रघुवंशभूषण ।
अयमुद्यमस्तु सदृशो हि राघवा भुवि मानकीर्तिधनसञ्चिचीषवः ॥

जननी तवास्तु वनवासकारणं ननु पूर्वजस्य तव नाम शोभन ।
न हि सा कदापि तव वाच्यतामियात्त्रिजद्धिताय यदनेन भूयते ॥

स हि चित्रकूटभुवमात्तकौतुकः प्रियया:नुजेन सुकृतेन मादृशाम् ।
उमया सहार्धवपुषा च नन्दिना समलङ्करोति भगवानिवेश्वरः ॥ १५

श्रान्तो विभासि ननु राजसुताध्वखेदा-
त्प्राप्तोऽसि कान्तगुण मामकमाश्रमं त्वम् ।
विश्रम्य तावदिह किञ्चन सानुबन्धो
गन्तासि रामवसतिं तु यथावकाशम् ॥ १६

इत्युक्तः सपदि विलङ्घितुं महर्षेराज्ञां तामनलमसौ सुतस्तु राज्ञः ।
नामर्शो भवति यथाश्रमद्रुमाणामानायि द्रुतमगणेयमस्य सैन्यम् ॥

प्रतपसो विभवेन तपोधनः स्मरणमात्रसुसंभृतसाधनः ।
सदकरोदतिथिं भरतं जगत्प्रथितयामितया स सपर्यया ॥ १८

आदरो मधुरवाक्सहोदरोऽप्याश्रमं श्रमविमोदि तन्मुनेः ।
अग्रजन्मनि निविष्टमानसो नान्वभूदतिथिसत्क्रियामसौ ॥ १९

सानुजः सपदि राघवानुजो राघवाननविलोकनादरः ।
तापसेन बहुमानितस्ततो निर्जगाम सहसा पुरोधसा ॥ २०

मुनिप्रदिष्टमार्गेण गच्छन्सह पुरोधसा ।
दूरादाश्रममद्राक्षीद्धोमधूमानुमापितम् ॥ २१

विज्ञाय तमभिज्ञानैः प्रज्ञावान्राघवाश्रमम् ।
आज्ञाप्यानुगतान्प्रापद्राज्ञः सूनुरुपाश्रमम् ॥ २२

प्रफुल्लनवमालिकाकलितनिर्दयालिङ्गनै-
र्द्रुमैरतिमनोहरैर्नयनमञ्जुलैर्वञ्जुलैः ।
स चित्रशिखरस्य तामपि बलादिवाक्रान्तधी-
र्वनान्तरमणीयतामनुबभूव नालोकयन् ॥ २३

महामुनिकदम्बकैर्विमलपक्षकादम्बकैः
प्रफुल्लतरसारसैः सरससारवैः सारसैः ।
निषेवितशिवोदकामकृतपुण्यदूरामसा-
वलोकत सुरापगामनतिदूररामाश्रमाम् ॥ २४

ध्वस्तपङ्कमुनिसङ्घसेवितं त्यक्तभीतिहरिणीसमावृतम् ।
पुष्पितद्रुमलतासमायुतं राघवाश्रममुपेयिवानयम् ॥ २५

शान्तेर्निकेतनमिवामृतसारशीत-
माबद्धवल्कलजटालमपास्तचेलम् ।
अम्लानशोभमुटजेऽवनिजानुजाभ्या-
मन्वास्यमानमवलोकयति स्म रामम् ॥ २६

उपासितुमुपायनैः प्रकृतिभिः सभाभ्यन्तरे
महार्हमणिमौक्तिकस्थगितविष्टरेऽध्यासितुम् ।
विलोक्य च सदोचितं वनचरैर्वनेऽन्वासितं
कुशास्तरणसंस्थितं हृदि विषीदति स्माग्रजम् ॥ २७

ननाम वनदेवतामिव पतिव्रताग्रेसरीं
नवामिव विधोः कलामवनिजातविद्युल्लताम् ।
मनोमुदमतादृशीं रघुवरस्य मूर्तीकृता-
मथाग्रजवधूटिकामयमरण्यपुण्याङ्कुरम् ॥ २८

निरन्तरहृदन्तराकलितरामसंसेवया
स धन्यतमजीवनं रघुपतेर्दयाभाजनम् ।
उदैक्षत सुदीक्षितं जनकजार्यसंरक्षणे
कृतक्षणमनुक्षणं विनयलक्षणं लक्ष्मणम् ॥ २९

आर्येत्युदीर्य भरतः सहसोपकण्ठे
रामस्य दुःखविवशो भुवि मुक्तकण्ठः ।
भूमौ निपत्य वशिनामपि तापसानां
भिन्दन्निवोच्चतरमन्तरहो रुरोद ॥ ३०

अकस्मादायातं भरतमवलोक्याश्रमपदं
तदा रामोऽवादीच्चकितचकितेनैव मनसा ।
कथं तातस्तात क्व नु तव कुतोऽरण्यशरणं
किमायातं पापं मम हृदयमेवानुसरति ॥ ३१

न ते भीतं चेतः किमु भरत भो भूमिभरतः
कुपित्वा ते मात्रे किमसि विमुखस्त्वं नृपपदात् ।

न रज्यन्ते राज्ञि त्वयि किमुत भीताः प्रकृतयः
कुतो मामन्विष्यन्विजनमुपयातोऽसि विपिनम् ॥ ३२

प्रतीक्ष्या सा कच्चिन्मम कुशलिनी सौम्य जननी
सवित्री सौमित्रेस्तव च सुखिनी तात जननी ।
पितॄन्मातॄर्बन्धूंस्तदनु पितृतुल्यानपि गुरू-
न्द्विजान्वृद्धान्पूज्यान्सदयहृदयो मानयसि किम् ॥ ३३

अपि प्राज्यं राज्यं सुचिरमवितं धर्मनिपुणै-
र्नृपैरास्माकीनैर्विनतगुरुणा दत्तमधुना ।
समासाद्य श्रेयोवहमनुसरंस्तैरनुसृतं
तमेव प्राञ्चं त्वं नयसि सुपथं सौम्य जनताम् ॥ ३४

राघवेण भरतस्त्वनुयुक्तो दुःखभारविधुरीकृतवक्त्रः ।
बाष्पपूरकलुषीकृतनेत्रः प्रत्युवाच विनयानतगात्रः ॥ ३५

शीलेनाभिजनेन चार्य वयसा धैर्येण शौर्येण वा
प्रज्ञानेन पुनः श्रुतेन यशसा ज्येष्ठे वरिष्ठे त्वयि ।
निर्याते विपिनं निरस्य मकुटं धृत्वा जटावल्कले
लोके कः कुशली क्व वा स कुतुकी कैकेयिकां तां विना ॥ ३६

मयि मातुलगेहवर्तिनि त्वयि निर्गच्छति दण्डकावनम् ।
सुतशोकविभिन्नमानसः स पितास्तं सवितेव नो गतः ॥ ३७

राज्ञा त्वया च विधिना विरहीकृतायाः
साकेतनामकरघूद्वहराजधान्याः ।
कष्टां दशामहह दुर्भगतां तदीयां
किं वर्णयामि वचसा च भवज्जनन्याः ॥ ३८

मां पृच्छसि त्वमबुधं खलु राजधर्मा-
न्धर्माच्च्युतस्य ननु किं मम राजधर्मैः ।
ज्येष्ठे सुते सति विचक्षण किं कनीया-
न्राजा भवेत्कथय संप्रति राजधर्मम् ॥ ३९

उत्तिष्ठ राम जनकप्रिय सानुजस्त्वं
नैवापमम्बु जनकाय मृताय देहि ।
त्वद्दत्तमेव नितरां जलमस्य तृप्त्यै
प्रेयान्यतस्त्वमसि नस्तनयश्चतुर्णाम् ॥ ४०

एवं पितुर्मृतिकथामवकर्ण्य रामो
नाराचवेधपरुषां भरतोदितां ताम् ।
सालद्रुमः परशुनेव निकृत्तमूलो
तातेति हा क्व नु गतोऽसि वदन्नपप्तत् ॥ ४१

संज्ञामवाप्य शनकैः शिशिरोपचारै-
र्भ्रात्रादिभिः स विहितैरथ साश्रुनेत्रैः ।
हा हाकृतार्थमभवज्जननं ममेति
प्रान्ते स्थितं भरतमश्रुमुखो बभाषे ॥ ४२

किं मेऽधन्यतमेन सौम्य जनुषा किं वा निरर्थायुषा
किं मे चारुतरेण दिव्यवपुषा किं वा मयौजोजुषा ।
तातो येन मया तदा प्रियसुतो जीवन्न शुश्रूषितो
येनायं न च संस्कृतः खलु मृतो धिग्धिङ्मामाधन्यताम् ॥ ४३

येनाखण्डं शासितमेतद्रघुराज्यं
यज्ञैरिष्ट्वा येन जितोऽभूत्सुरलोकः ।

तस्य प्रेतो येन चिताग्नौ सुहुतोऽभू-
त्तस्मादन्यः को भुवि धन्यः क नु मान्यः ॥ ४४

वर्षाणीत्थं सौम्य समाप्य प्रयतोऽहं
पित्राज्ञतारण्यनिवासे नव पञ्च ।
भूयो भूतप्रेतपिशाचालयतुल्यां
हा हायोध्यामुत्सवहीनां कथमीक्षे ॥ ४५

विलपन्तमेवमार्यं प्रियया सह सीतया च सहजेन ।
परिसान्त्वयन्नवादीद्भरतो विरतो मनाक्शुचोभरतः ॥ ४६

आर्य कृतेन चिरं रुदितेन स्वर्गगतः कथमेति पिता नः ।
कन्दरतोऽब्धिकटाहगतः किं प्रत्यवरोहति वारिसमूहः ॥ ४७

आर्येदानीमलमिति रुदितैरेतैः कार्यं न हि किमपि पितुः ।
नैवापापो वितरतु स भवान्मैवापस्त्वं नयनविगलिताः ॥ ४८

भरतोदितानि वचनानि ततः परिसान्त्वनानि स निशम्य पितुः ।
उदकक्रियां विधिवदाचरितुं रघुनन्दनः सुरधुनीमगमत् ॥ ४९

स्नात्वा विदेहसुतया सह लक्ष्मणेन पुण्योदके प्रविमले सुरलोकधुन्याः ।
रामो मृताय जनकाय नृपाय तत्ते तत्ते भवत्विति जलाञ्जलिमुत्ससर्ज ॥

मृष्टाशिने तदनु पङ्क्तिरथाय राज्ञे
हा हैङ्गुदं बदरमिश्रितमात्मभोज्यम् ।
पिण्याकपिण्डमददात्पुरुषा यदन्ना-
स्तेषां हि देवपितरोऽपि तथा तदन्नाः ॥ ५१

निर्वर्त्य तेन सहजेन निवापकृत्यं
मन्दाकिनीतटभुवोटजभूमिभागम् ।
प्राप्ते रघूद्वहसुते जननीजनास्तं
प्रापुर्व्यपेतकुतुकाः प्रथमानशोकाः ॥ ५२

कथमिव तदा कौसल्यायाः सुतस्य च सङ्गमे
पुलकजनको मर्मग्रन्थेर्विभेदकरो नृणाम् ।
हृदयभिदुरो गात्रोत्कम्पी तयोः करुणो रसः
कथयितुमलं वाचा प्राचः कवेः कठिनादृते ॥ ५३

विधिसुतः स भगवान्प्रियंवदो दशरथाग्रमहिषीश्च तत्सुतम् ।
हितवचोभिरनुनीय तावुभौ व्यरमयद्धि रुदितान्निरर्थकात् ॥ ५४

शोकभारविधुरीकृतहृदयं बाष्पपूरकलुषीकृतवदनम् ।
राघवोऽथ भरतं कृतविनतिं सान्त्वयन्निदमभाषत सुमतिम् ॥ ५५

प्रसूजनापलपनमेदुरा खरा न भारती तव रुचिरा विभाति मे ।
अनौचिती परजनदोषदर्शिनी मतिस्तु ते किमु जननीविदूषिणी ॥ ५६

आयुष्मतस्तव पितुर्विगर्हणा स्वर्गापवर्गपदवीनिबर्हणा ।
वागीदृशी सगरवंशजन्मनो नो युज्यते श्रुतिषु पारदृश्वनः ॥ ५७

जनके सति ननु जीवति जनसंसदि स ददौ
विपुलं मम विपिनं तव महतीमिह जगतीम् ।
पितृशासनपरिपालनमखिलागमगदितं
विहितं हितमथवाहितमुभयोरपि नियतम् ॥ ५८

व्रज नगरीमितो भव नराधिपतिर्महित-
स्त्वहमपि राजराडिह भवामि वने चरताम् ।

दिनकरतापहा तव सितातपवारणकः
　स भवतु मेचको मम तमालतरुप्रकरः ॥　　५९

उषसि तु मागधाः श्रुतिसमञ्चितगीतरसै-
　स्तव मधुरैर्मनाश्शिशिरयन्त्वलमङ्ग विभो ।
पिकविरुतानि षट्चरणझांकृतिसंमिलिता-
　न्यलमनुवासरं सुखयितुं वनभूमिषु माम् ॥　　६०

भवतु तवारिजित्कुशलधीः सचिवाग्रसरो
　मम तु स लक्ष्मणो विदित एव हि मुख्यसुहृत् ।
वरतनया वयं दशरथं भुवि तथ्यगिरं
　भरत समाचराम शुचमात्मनि मा स्म कृथाः ॥　　६१

याचितोऽपि यवीयसा भरतेन तेन सुमेधसा
　शासितोऽपि महीयसा विधिसूनुना च पुरोधसा ।
विज्वरो गुरुवाक्यपालनतत्परोऽवनिजावरो
　वारणाय वनान्तवासरतेर्मतेर्न समैहत ॥　　६२

इतीव बहुधानतोऽपि भरतः समाधानतः
　पितुर्वचनगौरवादटविपर्यटाद्योन्मुखम् ।
न भूमितनयापतेरलमभूदहो मानसं
　प्रतीपयितुमापगाजलमिवोदधेरुन्मुखम् ॥　　६३

आर्ये स्वधार्यमकुटे निरपेक्षमणे
　भग्नाशयः स भरतोऽपि विदीर्यमाणः ।
आत्मानमार्यमकुटार्हममन्यमान-
　स्तत्पादुकाद्वयमयाचत वन्दमानः ॥　　६४

महार्हरत्नखचितकिरीटमपि दाशुषः ।
दारव्याः पादुकायास्तु दानं दाशरथेः कियत् ॥ ६५

अहो बत दुराशया प्रथममेव मध्याम्बया
किरीटमभवद्धृतं पितृपितामहैरार्जितम् ।
वने विचरणक्षमं सपदि पादरक्षाद्वयं
हृतं किल यवीयसा रघुपतेरपि स्वार्जितम् ॥ ६६

दत्तामपारकरुणावरुणालयेन
रामेण तावदभिरामगुणाकरेण ।
मूर्ध्ना जहार सह लोकशुभावहाभ्या-
माशीस्ततिं स भरतो वरपादुकाभ्याम् ॥ ६७

गृहीतपादुकं रामो भरतं भ्रातृवत्सलः ।
श्रेयसे भूयसे तस्य शशासैवं यशोधनः ॥ ६८

शप्तो भृशं त्वमसि भूसुतया मया च
निःश्रेयसाय जगतामुभयोर्हिताय ।
राज्यावनस्य तव मे वनवर्तनस्य
दात्रीममूं प्रति रुषं कुरु मा सवित्रीम् ॥ ६९

इति दाशरथिः प्रशशास सुधीर्विनतं भरतं पदयोः पतितम् ।
स्रगिवाग्रजनेस्त्वनुशास्तिरियं शिरसा जगृहे भरतेन तदा ॥ ७०

धृतचीरजटो मुनिवृत्तिरहं नव पञ्च समास्त्वमिवाग्रजने ।
गणयन्भवदागमनावसरं निवसामि बहिर्नगराच्नियतः ॥ ७१

समतीत्य यदा क्षणमप्यवधिं यदि दृष्टिपथं मम यास्यसि नो ।
ज्वलदग्निचयं प्रविशन्सपदि प्रसभान्नियतं विजहामि तनुम् ॥ ७२

इत्येवमादिसमयं भरतो विधाय
रामेण बाष्पनयनेन तदा विसृष्टः ।
आश्वासितश्च सह मातृजनैरहृद्या-
मागादपास्तकुतुकः पुनरप्ययोध्याम् ॥ ७३

आर्यपरित्यक्तपुरी वस्तुमनर्हा किलेति स निरस्यन् ।
नन्दिग्रामनिवासे भरतस्त्वरितो जितेन्द्रियग्रामः ॥ ७४

ये राघवप्रतिनिधी शुभपादुके ते
राज्येऽभिषिच्य विनिवेदितराज्यतन्त्रः ।
ताभ्यां जटावलयतारवचीरधारी
सोऽरण्यवासदिवसान्गणयन्नुवास ॥ ७५

रामोऽपि तावदिह पौरजनानुरोधा-
ज्जायेत नूनमसकृद्वनवासरोधः ।
इत्याकलय्य खलु चित्रविचित्रकूटा-
त्प्रायाद्द्रयान्निलयमत्रिमुनेर्यियासुः ॥ ७६

आसाद्य हृद्यमनवद्यमिमं महर्षे-
रत्रेर्मनःश्रमविनोदिनमाश्रमं तम् ।
सार्धं तदार्धवपुषा च कनीयसाद्धा
रामो ननाम स मुनिं विनयाभिरामः ॥ ७७

वृद्धया सुभगयानसूयया भूसुतापि सुभगानसूयया ।
मानितात्रिमुनिधर्मजायया प्रापिता मरुषु जह्नुजा यया ॥ ७८

जानकीगुणगणेन सा यदा मोदमानहृदया ददौ तदा ।
अङ्गरागमनुलेपनं मुदा शाश्वतं वसनभूषणस्रजः ॥ ७९

आनसूयमिदमादरेण सा भर्तुरद्वयमुदं विधायिनी ।
संप्रगृह्य शशुभेऽवनीजनिः श्रीः स्वरूपकलितेव भाविनी ॥ ८०

अथ स राघवधर्मपरिग्रहः स्वयमपाययदत्रिपरिग्रहम् ।
श्रुतिमनोमधुरं सपदि स्वयं वरकथामृतसारमपेक्षितम् ॥ ८१

भगवति दिननाथे रामविश्रामहेतो-
रवलघु चरमाद्रौ वाम्बुधौ वा निलीने ।
हृदि मुदमतिवेलं राघवस्योपनेष्य-
न्नुदयशिखरिशृङ्गे प्रादुरासीन्मृगाङ्कः ॥ ८२

तदनु मुनिकृतं तत्सादरातिथ्यमित्थं
रघुपतिरनुगृह्णन्सानुजायोनिजोऽसौ ।
मुनिजनकथिताभिः पावनीभिः कथाभि-
र्व्यनयदयनखेदं सा निशापि व्यरंसीत् ॥ ८३

आकर्ण्यासुरकृतविप्लुतिं मुनीनां दोर्दण्डे सपदि गृहीतचापदण्डः ।
काकुत्स्थः पृथुलपलाशदण्डपाणिः प्रायासीद्धरिरिव दण्डकां प्रचण्डः ॥

इति श्रीमद्वाधूलकुलजलधिकौस्तुभस्य श्रीमन्मार्गसहायशास्त्रि-
णस्तनूजस्य श्रीमत्सुब्बाम्बागर्भशुक्तिमुक्ताफलस्य श्रीसुन्दरे-
श्वरस्य कृतौ सुन्दररामायणकाव्ये
षष्ठः सर्गः

## ॥ अथ सप्तमः सर्गः ॥

मध्याह्नमार्ताण्ड इवाभ्रमण्डलं प्रचण्डकोदण्डकरोऽथ दण्डकाम् ।
रामो विरामाय नरामिषादिनां विशङ्कचाराखिलतापसाश्रमान् ॥

अभ्यर्थितस्तत्र सहानुजन्मना स मैथिलीजानिरपूजि तापसैः ।
तेभ्यो वितीर्याभयमाशरव्रजात्ततो विराधस्य वनं समाविशत् ॥ २

शार्दूलचर्माम्बरमान्त्रमालिकं स भीषणं भूरिकपालकुण्डलम् ।
शूलेऽवसज्य द्विपसिंहमस्तकान्समभ्यधावन्तमपश्यदाशरम् ॥ ३

दृष्ट्वा विराधोऽपि स रामलक्ष्मणौ विदेहराजन्यसुतां च तावुभौ ।
सीतां समादाय बलादमर्षणो जगाद तौ राजसुतौ वरायुधौ ॥ ४

भो भो जटावल्कलचापधारिणौ युवां युवानौ विपिनं किमागतौ ।
केयं महार्हाभरणा मनोरमा युवां हनिष्यन्नधुना हरामि ताम् ॥ ५

इत्यालपन्तं प्रसमीक्ष्य राक्षसं प्रियां तदङ्के करुणं विलापिनीम् ।
रामोऽसिमादाय सहानुजन्मना तदीयहस्ताङ्घ्रिशिरोऽधि सोऽच्छिनत्

अभ्रंलिहाक्रन्दनरावमुच्चकैरसौ वितन्वंस्तनुमासुरीं जहौ ।
रामेण तद्वैरमभून्महर्द्धये ह्यहो विचित्रं महतां विचेष्टितम् ॥ ७

तौ राजसूनू मुदितौ निशाचरं गतासुमुर्व्याः प्रदरे महत्तरे ।
आरब्धमाक्षिप्य हि रक्षसां वधं रसातलेऽपि प्रथयांबभूवतुः ॥ ८

सीतामथाश्वास्य सहानुजन्मना समेयिवान्द्राक्शरभङ्गनामकम् ।
प्रत्यादिशन्तं परमेष्ठिनः पदं स्वदर्शनाकाङ्क्षिणममितेजसम् ॥ ९

श्रीरामसन्दर्शनकौतुकी मुनिः स आतिथेयः प्रथितः प्रियातिथिम् ।
दृष्ट्वा कृतार्थो ज्वलने निजं वपुः समित्समिद्धे स जुहाव तत्क्षणम् ॥

रामोऽपि तद्दर्शनधूतकल्मषः कृतार्थमात्मानममंस्त सानुजः ।
पूतात्मनस्तस्य मुनेरनुज्ञया ततः सुतीक्ष्णाश्रममाजगाम सः ॥ ११

पुण्याश्रमेऽस्मिञ्ज्वलदग्नितेजसा महर्षिणा सादरमेष सत्कृतः ।
आपृच्छ्य तं द्रष्टुमथात्तकौतुको जगाम चान्यानपि तापसाश्रमान् ॥

प्रत्याश्रमं तौ सह सीतया सुखं वने चरन्तौ मणिकुट्टिमोचितौ ।
अब्दानैष्टां दश वासरानिव क्रमादतान्तौ खलु रामलक्ष्मणौ ॥ १३

यस्यासुरौ ब्रह्महणौ सहोदरौ हुतौ मुनेराक्षिपिचण्डपावके ।
येन त्रिराचान्तमशेषमम्बुधेर्जलं च तस्याश्रमभागमभ्यगात् ॥ १४

सीतासखं सानुजमाश्रमं निजं समागतं कुम्भजानिर्निशम्य सः ।
अभ्युज्जगामार्घ्यकरः स्वयं मुनिर्हुताशनागारमनीनयच्च तम् ॥ १५

पर्यायतस्तौ नरदेवपुत्रकौ सपर्यया राजसुतानुरूपया ।
सीतां सतीमस्तकमण्डनायितां प्रियातिथीनर्चितवान्महामुनिः ॥ १६

रामाय तस्मै मुदितश्च वैष्णवं प्रयच्छति स्मास्त्रममोघमुत्तमम् ।
तूणी च पूर्णौ निशितैः शरोत्तमैर्मृधे मुनिर्यातुहभिर्जयप्रदैः ॥ १७

रामस्ततोऽगस्त्यसपर्ययानया नितान्तहर्षाम्बुधिमग्नमानसः ।
सीतासमेतस्त्वनुजन्मना समं प्रणम्य भूयो वचनं समाददे ॥ १८

भो भो भवद्दर्शनलाभवैभवाद्वयं कृतार्थाः स्म विधूतकल्मषाः ।
श्रेयांसि भूयांसि समापतन्ति नो ह्यहो मुने मध्यममात्रनुग्रहात् ॥ १९

यत्रावशिष्टान्गमयामि वत्सरान्मुने विनिर्देशयितुं ममार्हसि ।
बाला स्नुषा ते वनवासलालसा सुखेन वस्तुं क्षमते बहूदकम् ॥ २०

इत्थं ब्रुवाणे नृपसूनुसत्तमे महामुनिस्तं प्रतिवक्ति सादरम् ।
पुण्यावनी पञ्चवटीति विश्रुता द्वियोजने प्राज्यफलामलोदका ॥ २१

गोदावरी पुण्यतमा मनोरमा महानदी तत्र विचित्रकानना ।
साध्वी द्वितीयात्र समाहितक्षणा मनोऽनुकूला तव रंस्यते सुखम् ॥

तत्रारचय्यावसथं यथासुखं प्रियासहायः सहजन्मना समम् ।
अल्पावशिष्टान्वनवासवत्सरान्समाहितस्त्वं समयं समापय ॥ २३

इत्येवमुक्तो भरताग्रजस्ततो महर्षिमापृच्छ्य स तं कृतानतिः ।
पन्थानमाश्रित्य महर्षिचोदितं प्रियासखः पञ्चवटीं समाविशत् ॥ २४

तत्रारचय्यावसथं प्रियासुखं सदेशनीवारसमित्कुशोदकम् ।
भ्रात्रा सहानेन निदेशवर्तिना सुखं न्यवात्सीत्प्रिययानुकूलया ॥ २५

इत्थं सुखं तत्र वसत्सु कानने परस्परालापमनोविनोदिषु ।
प्रावर्ततर्तुः प्रवसज्जनार्तिकृच्छरद्व्यपाये सुभगो हिमागमः ॥ २६

नीहारसंवारितमित्रहस्तयात एव निर्धूतपयोजशोभया ।
अम्भोरुहिण्यानुपभोगयोग्यया हिमागमेऽभावि च नालशेषया ॥ २७

कालो बहिः शीततमः प्रवासिनां नितान्तमन्तर्ज्वरयन्वियोगिनाम् ।
वैकल्यमङ्गे हृदि चातनोत्यहो विचित्रमेतस्य विरुद्धधर्मता ॥ २८

या सौम्यतातिग्मरुचेः स्वभावजा करादृता साहिमरोचिषस्तदा ।
यासौम्यता तिग्मरुचेः स्वभावजा करादृता सा हिमरोचिषस्तदा ॥

नेत्रान्तसन्दर्शितपूर्वजाज्ञया तदासिमादाय बिलेशयाकृतिम् ।

प्राच्छिद्य तस्याः खलु कर्णनासिकं स लक्ष्मणस्तां निरकासयत्ततः ॥

स. ७, श्लो. ३६, पृ. ६७

मोदातिरेकादिव मेदसां भरा ह्यनल्पवीर्यं पतिमाप्य कामिनी ।
भूयोऽपि संभोगसुखप्रपित्सया विलम्बमानेव विभाति यामिनी ॥ ३०

रात्रिंचरी शूर्पणखेति विश्रुता मनोभवेषुप्रविभिन्नमानसा ।
लङ्काजनस्थानविनाशनाटिकानटीव रामाभिमुखी समागता ॥ ३१

आजानुबाहुं त्रिदशोपमद्युतिं गजेन्द्रविक्रान्तविलासगामिनम् ।
सा राक्षसी भीमविरूपदर्शना निशाम्य तं कामयते स्म कामुकी ॥

नाहं सभार्यो भवितुं तवाभिको भजस्व भर्तारमिमं ममानुजम् ।
श्रीमानपाणिग्रहणः स मांसलो युवानुरूपस्तव रूपसम्पदा ॥ ३३

दासस्य भार्या भवितुं भवादृशी कथं समीहेत मनोज्ञविग्रहे ।
आर्येण सोऽहं परवान्मृदुस्मिते तमेव भर्तारमवाप्तुमर्हसि ॥ ३४

एवं ह्युभाभ्यां परिहास्यमानया विनिश्चितं ज्ञातुमशक्नुवानया ।
सा मृत्युपाशप्रतिमानयानया विदेहराजन्यसुता ह्यभिद्रुता ॥ ३५

नेत्रान्तसन्दर्शितपूर्वजाज्ञया तदासिमादाय बिलेशयाकृतिम् ।
प्राच्छिद्य तस्याः खलु कर्णनासिकं स लक्ष्मणस्तां निरकासयत्ततः ॥

सा कृत्तनासाश्रवणा विरूपिणी भुवि क्षरन्ती रुधिरं निशाचरी ।
कोपादसह्यव्यथया च तन्वती विलापमुच्चैः समयाद्यथागतम् ॥ ३७

स्थानं जनस्थानमवाप्य रक्षसां मदेन मोहेन भयेन मूर्च्छिता ।
नक्तंचरी शूर्पणखा खरस्य सा खरस्वराख्यातवती खरस्वसा ॥ ३८

अत्याहितं वो विपिने निवासिनां मनुष्यमात्रादजनीह रक्षसाम् ।
येनाहमेवं ह्यसिना विरूपिता स पञ्चवट्यामटति प्रियासखः ॥ ३९

द्वौ भ्रातरौ तौ मुनिवेषधारिणौ तथापि कोदण्डकरौ सुरूपिणौ ।
अल्पेतराकल्पवती नितम्बिनी समाश्रिता काचन देवतेव तौ ॥ ४०

तावश्विनीदेवसमानवर्चसौ विवस्वदग्निप्रतिमानतेजसौ ।
अस्मादृशाक्रान्तवनं स्त्रियाभिया भयानकं सञ्चरतस्तयाभयौ ॥ ४१

नाथे सति त्वय्यकुतोभये वने भवादृशामद्य समागतं भयम् ।
भ्रातः समुत्तिष्ठ कुरु प्रतिक्रियां निरस्य तन्द्रीमचिरस्य विद्विषाम् ॥

इत्थं समुच्छेदितकर्णनासया तया भगिन्याभिहितो विवर्णया ।
रोषातिरेकेण कषायितेक्षणो जगाद संग्रामसमाहितक्षणः ॥ ४३

मा ते भयं किञ्चन मा च रक्षसां मितायुषौ तौ युधि हन्मि मानुषौ ।
दंष्ट्रामिवोद्धर्तुमरालगामिनः समीहमानौ स्वपतः करेण तौ ॥ ४४

इत्थं प्रजल्पन्सहसा सहानुगैः परःसहस्रैर्निरगान्निशाचरैः ।
रामस्य युद्धे रजनीचरद्विषो मदान्ध आसन्नमृतिर्जिघांसया ॥ ४५

रामोऽपि रात्रिंचरराज्यधूर्वहं निरीक्ष्य दूरात्सबलं समागतम् ।
आदिश्य सौमित्रिमयोनिजावने रणाय विष्फारितकार्मुकोऽभवत् ॥

नक्तंचरास्ते खरदूषणादयः समेयुरेकाकिनमेव राघवम् ।
प्रावर्ततायोधनमेतयोर्द्वयोरभूतपूर्वं मरुतां प्रपश्यताम् ॥ ४७

न्यस्तं पुरः पादमचालयन्रणे मुहूर्तमात्रात्खरदूषणादिकान् ।
रक्षांसि चान्यानि जघान राघवश्चतुःसहस्राण्ययुताधिकानि सः ॥४८

हत्वामिषादान्मुनिलोककण्टकान्सभाज्यमानं मुदितैर्महर्षिभिः ।
साध्वी तदा सा मुदिता जयश्रिया विराजमानं परिषस्वजे प्रियम् ॥

यायो जनस्थानविनाशकारणं खरस्वसा शूर्पणखा भयद्रुता ।
लङ्काविनाशेऽपि कृतादरेव सा जगाम तां रावणबाहुपालिताम् ॥५०

वृत्तिं प्रवृत्तिं वसतिं वपुःश्रियं पराक्रमं दाशरथेरनुक्रमम् ।
सा रावणायाभिदधे महौजसां प्रमापणं तेन समस्तरक्षसाम् ॥ ५१

रामो न जय्यो रणचण्डविक्रमः सुरासुरैरप्यथवाशरैश्शरैः ।
रात्रिंचराणामभवन्महौजसां मनुष्यमात्रेण नवः पराभवः ॥ ५२

आज्ञाकरेणास्य ततो यवीयसा निकृत्तनासाश्रवणा विरूपिता ।
साहं विमुक्ता महता दयावता विशङ्कमानेन वधं सजीविता ॥ ५३

सीता शरत्पर्वशशिप्रभानना विशालसंफुल्लसरोजलोचना ।
तस्यानुरक्ता तरणिं यथा प्रभा विभाति तन्वी वनदेवतेव सा ॥ ५४

सा यस्य भार्या नवविद्रुमाधरा यमाश्रयत्युन्नबृहत्पयोधरा ।
येनालपन्ती च मृदुस्मिताननना स एव धन्यः स हि पुण्यपूरुषः ॥५५

सौन्दर्यशीलैः सकलातिशायिनी विधातुरेवादिमसृष्टिरूपिणी ।
सा प्राणतुल्या नु ततोऽधिका नु वा स यत्कृते दाशरथिर्जिजीविषुः ॥

तत्तादृशी रूपवती वधूमणिस्तवावरोधे ननु वस्तुमर्हति ।
राज्यश्रियं निर्विशतोऽपि ते भवेत्तया विना संपदि किञ्चिदूनता ॥५७

भ्रातॄन्जनस्थानगतान्महौजसश्शरेण रामेण हतान्पदातिना ।
श्रुत्वापि मत्तो विषयेषु संगतो न पौरुषं त्वं किमिवावलम्बसे ॥

किं तेन मर्त्यापशदेन भीरुणा विरूपितायां मयि वा घृणा न ते ।
त्वामन्तरेण स्वजनाभिमानवान्पराभवं वैरिकृतं सहेत कः ॥ ५९

आसन्नमृत्युर्भिषजो यथौषधं मदीयवाचं खलु नाभिनन्दसि ।
अल्पोऽपि रोगः प्रथमे ह्युपेक्षितो विवर्धतेऽत्यन्तकरस्तथा रिपुः ॥६०

इत्येवमादीनि वचांसि शृण्वतः समाक्षिपन्त्याः स्वसुराशरेशितुः ।
क्रोधाग्निरन्तर्ववृधे समुत्थितो जगद्धिताय स्वकुलक्षयाय च ॥ ६१

रामं जनस्थाननिशाचरान्तकं रणाजिरेऽजय्यमवेत्य रावणः ।
तद्धर्मदारानपहर्तुमुद्यतः समासदत्संप्रति ताटकासुतम् ॥ ६२

मध्येसमुद्रं कुशिकात्मजाध्वरे स राघवास्त्रेण निपातितो यदा ।
रेफादिशब्दाच्चकितस्तदाप्रभृत्युपाददे तापसवृत्तिमाश्रमे ॥ ६३

मारीचमेतादृशमाश्रमे निजेऽप्यनार्यसंकल्प उपेत्य रावणः ।
श्रीरामजायाहरणे कृतक्षणः सहायतामेनमयाचतादृतः ॥ ६४

नक्तंचराधीशमनार्यनिश्चयं विनाशहेतोरविमृश्यकारिणम् ।
विज्ञातरामेरितसायकक्षतिः स ताटकेयो हितमेवमूचिवान् ॥ ६५

आसन्नमृत्युस्त्वमहो विभासि मे यदीदृशी बुद्धिरभाविनी तव ।
रामेण विख्यातपराक्रमेण ते न युज्यते वैरमिदं जिजीविषोः ॥ ६६

बद्ध्वा शिलां कण्ठतले महोदधिं तरीतुकामः प्रतिभासि बालिश ।
रक्तोत्पलभ्रान्तिमुपेत्य दुर्मतिः समिद्धमादातुमिवाग्निमिच्छसि ॥ ६७

क्षुद्रस्य ते दाशरथेर्महात्मनः सृगालकण्ठीरवयोरिवान्तरम् ।
वेशन्तरत्नाकरयोर्यथान्तरं पतङ्गभान्वोर्ननु यावदन्तरम् ॥ ६८

रामस्य भार्यामपहर्तुमिच्छता रविप्रभामप्यपहर्तुमिष्यते ।
उद्धर्तुमास्यादुरगस्य जीवतः करालदंष्ट्रामथवा प्रयत्यते ॥ ६९

आस्था यदि स्यात्तव जीविते धने हितं च तथ्यं शृणु मे वचः सखे ।
को नाम रामेरितसायकव्यथां निवेदितुं ते महते क्व जीवति ॥ ७०

इत्थं सुबाहोरनुजेन भाषितं हितं न जग्राह वचः स रावणः ।
आप्तस्य वाक्यं भिषजश्च भेषजं न रोचते खल्वचिरान्मरिष्यते ॥ ७१

रक्षोऽधिपे प्रत्युत तद्वधोद्यते भृशं निराशो भवति स्म जीविते ।
आयोधने रामशरेण मारणं स सुन्दसूनुर्वरमित्यमन्यत ॥ ७२

सन्दानितो रामकृतान्तरज्जुभिर्बलावकृष्टः स हि ताटकासुतः ।
रक्षोविनाशाय जगद्धिताय तन्मनोरथं पूरयितुं मनो दधे ॥ ७३

अभ्यागतं तं विधिवद्दशाननं सपर्ययाभ्यर्च्य ततोऽनुरूपया ।
तेनोपदिष्टेन पथा सहामुना रथं समारुह्य विवेश दण्डकाम् ॥ ७४

यत्राश्रमे तापसवृत्तिमाश्रितः सहानुजेन प्रिययानुकूलया ।
प्रीतिं परां दाशरथिः स निर्विशन्प्रदेशमेनं प्रविवेश दस्युवत् ॥ ७५

इति दशमुखेनाकृष्टोऽसौ दुरध्वजुषामुना
विलयसमये प्रत्यासन्ने विपर्ययशेमुषिः ।
कनकहरिणो भूत्वोद्युङ्क्ते वियोजयितुं च तौ
मुदितमनसौ सीतारामौ मिथः प्रियदम्पती ॥ ७६

इति श्रीमद्वाधूलकुलजलधिकौस्तुभस्य श्रीमन्मार्गसहायशास्त्रिणस्तनू-

जस्य श्रीमत्सुब्बाम्बागर्भशुक्तिमुक्तामणेः श्रीसुन्दरेश्वरस्य

कृतौ सुन्दररामायणकाव्ये

सप्तमः सर्गः

## ॥ अथ अष्टमः सर्गः ॥

प्रियमण्डनाथ कुसुमेषु लालसा प्रतिमन्मथप्रियतमेव भूसुता ।
कुसुमापचायकृतकौतुका वने विचचार चारुगमना कदाचन ॥ १

गिरिमल्लिका चिकुरमण्डनोचिता नवमालिका च गळमालिकोचिता ।
इति गन्धवन्ति कुसुमानि चिन्वती प्रतिपादपं व्रजति सा कृशोदरी ॥

क्रकचाकृतिः कनकवर्णकेतकी प्रवियोगिनीहृदयदारुदारणी ।
शिवसन्निधानविधिकूटसाक्षिणी बलिकर्मणे न परिकर्मणेऽर्हति ॥ ३

इति सा सकण्टकनगाग्रवर्तिनीमपचेतुमक्षमतयैव केतकीम् ।
बहु मन्यते स्म न हि दोषदर्शिनी जनता भवेन्न किमलभ्यवस्तुनि ॥

हृदयेप्सितानि कुसुमानि कौतुकादपचिन्वती विपिनजानि जानकी ।
नवरत्नबिन्दुभिरतीव सुन्दरं हरिणं ददर्श हरिणीविलोचना ॥ ५

शरदिन्दुकुन्दसुमसोदरोदरं सरसीजकेसरसदृक्तनूरुहम् ।
शतमन्युकार्मुकसवर्णवालधिं कमनीयरूपमनणीयओजसम् ॥ ६

अतिविस्मितस्तिमितदीर्घया दृशा तमदृष्टपूर्वमभिवीक्ष्य भूसुता ।
तनुरूपसम्पदपकृष्टमानसा स्पृहयाञ्चकार हरिणाय शोभना ॥ ७

अथ सार्यपुत्रमविदूरवर्तिनं सहसाश्रमस्थमनुजन्मना समम् ।
कलमञ्जुलेन रणितेन राघवं भुविजाजुहाव मृगयाविशारदम् ॥ ८

प्रियतामृतार्द्रहृदयं दरस्मिता दयितं जगाद मृदुमञ्जुभाषिणी ।
हृदयेश पश्य हृदयापहारिणं हरिणं सुवर्णमयमेनमद्भुतम् ॥ ९



प्रियतामृतार्द्रहृदयं दरस्मिता दयितं जगाद मृदुमञ्जुभाषिणी ।
हृदयेश पश्य हृदयापहारिणं हरिणं सुवर्णमयमेनमद्भुतम् ॥

स. ८, श्लो. १, पृ. ७२

यदि शक्यमानय कुरङ्गसत्तमं रुचिरं विहारसुभगं सजीवितम् ।
विपिनान्निवृत्य नगरे निवत्स्यतामवरोधभूषणमसौ भविष्यति ॥ १०

यदि शक्यते न हि तवास्य जीवतो ग्रहणं तथापि नवरत्नचित्रितम् ।
कमनीयमास्तरणसाधनं भवेदजिनं हतस्य मृदुळं तवेषुणा ॥ ११

इति चर्मणा हृतहृदा समीरितं वचनं निशम्य जनकेन्द्रकन्यया ।
स विचक्षणः परममित्रलक्षणो निजगाद पूर्वजमितीव लक्ष्मणः ॥

अयथार्थसत्त्वमिदमार्य नन्वहो कुहनाकुरङ्गमवगन्तुमर्हसि ।
बहवः प्रतारणपरा हि राक्षसा विपिने चरन्ति ननु कामरूपिणः ॥ १३

जनकात्मजाविदितवस्तुनिश्चया मृगतृष्णिकास्विव कूपीटशङ्कया ।
ननु कूटराक्षसमृगे स्पृहावती ग्रहणे स्पृहास्य तव मास्तु पूर्वज ॥ १४

रुचिरोऽयमार्य जगदद्भुतद्युतिर्हरिणो न जातु भुवि वीक्षितः श्रुतः ।
अयथार्थरूपिणि नभोऽम्बुजन्मनि क नु को नु विश्वसिति वस्तुतत्त्ववित्

तदनर्थकारिणि कुरङ्गरूपिणि प्रजहाहि यातुनि मृगोत्तमभ्रमम् ।
जहि तं यदीच्छसि शरेण मायिनं ह्यथवा जहीहि निजवर्त्मयायिनम्

इति लक्ष्मणेन परमार्थवेदिनाभिहितं हितं खलु सुमित्रलक्ष्मणा ।
रुरुचे विदेहतनयानुरागिणे सितशर्करेव न हि पैत्यरागिणे ॥ १७

रुचिराजिनाय हरिणाय मैथिली तव लक्ष्मण स्पृहयते प्रजावती ।
कुहनामृगो यदि मया निहन्यते न यदि प्रियार्थमयमाहरिष्यते ॥ १८

तदिहाश्रमे भव गृहीतमार्गणो जनकात्मजामव समाहितेक्षणः ।
अजिनं प्रगृह्य पुनरागमिष्यते पृषतं निहत्य सहसैव लक्ष्मण ॥ १९

रघुनन्दनोऽयमवनीसुतामनोरथमेव पूरयितुमाहितक्षणः ।
स विधेयमेवमनुजं समादिशंस्तमनर्थहेतुमनुजग्मिवान्मृगम् ॥ २०

स मृषामृगोऽपि जनयन्कुतूहलं कृतकेतरैणगमनं विडम्बयन् ।
कलयन्ससाध्वस इवानुसारिणं मुहुराचकर्ष मृगयाविनोदिनम् ॥ २१

कृतकेन तेन हरिणेन राघवो विपिने सुदूरमपवाहितस्तदा ।
ग्रहणे स तस्य वितथीकृतश्रमो निशिताशुगेन निजघान निर्घृणः ॥ २२

शरताडितोऽथ निपतन्महीतले विजहौ शरीरमवशः स पार्षतम् ।
निजमूर्तिमेव समपद्यतासुरीं प्रकृतिः परं हि चरमेऽवशिष्यते ॥ २३

निनदेन रामसदृशेन हा प्रिये जनकात्मजेति ननु लक्ष्मणेति च ।
गिरमुच्चकैः स करुणं समुद्गिरंस्तनुमप्यनार्यमतिरौज्झदासुरीम् ॥ २४

स्वरमार्तरूपमुपशृण्वतोस्तयोर्जनकात्मजादशरथाङ्गजन्मनोः ।
भयमाशरादनुपदं विशङ्किनोर्युगपद्बिभेद हृदयं तदोभयोः ॥ २५

अथ लक्ष्मणस्य परमार्थवेदिनः स्मरतः स्म वाक्यमनुतप्तमानसौ ।
अवशावुभावपि सुदूरवर्तिनौ मनसाधिजग्मतुरुभौ परस्परम् ॥ २६

इति तौ परस्परसमागमैषिणौ हृदयेऽर्थितस्वकुलमान्यदैवतौ ।
सहसाश्रमाभिमुखमार राघवः प्रजिघाय भूमितनयापि लक्ष्मणम् ॥

ननु लक्ष्मणाग्रजमवाव राघवं शरणैषिणं तमभिधाव सत्वरम् ।
रुदितं निशम्य करुणं मनो मम व्यथितं विमुञ्चदिव जीवितं वपुः ॥

ननु देवि राक्षससमूहसेविते विपिने विहाय भवतीं व्रजामि नो ।
निहिता त्वमत्रभवती महात्मनोपनिधिर्यथा मयि ममाग्रजन्मना ॥



कृतकेन तेन हरिणेन राघवो विपिने सुदूरमपवाहितस्तदा ।
ग्रहणे स तस्य वितथीकृतश्रमो निशिताशुगेन निजघान निर्घृणः ॥

स. ८, श्लो. २२, पृ. ७४

अनिवार्यमस्य बलिनां बलैर्बलं स हि दुर्जयो युधि सुरासुरैरपि ।
हृदयं तवास्तु ननु देवि निर्वृतं द्रुतमागमिष्यति पतिर्निरामयः ।। ३०

इति लक्ष्मणेन वशिना हितैषिणाभिहितं वचस्तु परथा समर्थितम् ।
विपदं विशङ्क्य परिदूयमानया हृदयेशितुर्जनकराजकन्यया ।। ३१

हृदयं तवावगतमार्यनिन्दितं दुरिताशयाकरुण वंशपांसन ।
विपिने यदर्थमयि राममन्वगास्तदवेहि सिध्यति न जातु लक्ष्मण ।।

प्रहितोऽसि किं जगति निन्द्यकर्मणा भरतेन तेन कुलपांसनेन वा ।
व्यसनं महत्प्रियमिवाग्रजस्य ते ननु मन्यसे मनुकुलाधमाधम ।। ३३

अरविन्दलोचनमनङ्गसुन्दरं कमनीयगात्रमनणीयओजसम् ।
पतिमाप्य राममभिरामवैभवं न पदा स्पृशेयमहमन्यपूरुषम् ।। ३४

जगतीतले ननु जिजीविषा न मे जगतीपतिं तमपहाय मे विभुम् ।
तव पश्यतः पतिविहीनजीवितं ज्वलनं प्रविश्य विजहामि निन्दितम् ।।

इति कर्कशं श्रुतिमनोविदारणं जनकात्मजोदितमनार्यभाषणम् ।
स निशम्य निश्चलमनाः प्रजावतीं विहिताञ्जलिः प्रतिजगाद लक्ष्मणः ।।

जननीसमा हि परमञ्च दैवतं भवती किमेवमभिधातुमर्हति ।
अथवेदृशी कठिनता निसर्गजा वनितासु देवि चपलासु दृश्यते ।। ३७

अधुनैव मैथिलि स यत्र राघवो ननु साधयामि कुशलं भवेत्तव ।
वनदेवताश्च कुलदेवताश्च ता भवतीमवन्तु विपिनान्तवर्त्मनि ।। ३८

स कुशाग्रधीरिति वदन्प्रजावतीं प्रणिपत्य तामविरताश्रुवर्षिणीम् ।
प्रविलोकयन्ननुपदञ्च मैथिलीं शनकैर्जगाम रघुनाथसन्निधिम् ।। ३९

अथ रामलक्ष्मणविहीनमाश्रमं प्रविलोक्य पापमतिराशराधिपः ।
जनकात्मजापरिजिहीर्षयाविशद्रजनीमुखं तम इवारवीन्दुभम् ॥ ४०

स यतीन्द्रवेषमवधृत्य पापधीस्तृणजालसंवृत इवान्धकूपकः ।
शनकैश्शनैश्चर इवेन्दुवल्लभामुपसीदति स्म जनकेन्द्रकन्यकाम् ॥४१

पतिदेवतापि पतिशोकलालसा प्रयतातिथिं सदकरोत्सपर्यया ।
तमिमं कुसुंभवसनं दशाननं न हि सा विवेद खलु कूटभिक्षुकम् ॥

स दशाननो मनसिजेषुणाहतो यतिवेषमात्तमवधतुमक्षमः ।
सपदि स्वरूपमवपद्य राक्षसं विशदीचकार दुरिताशयं निजम् ॥४३

क नु ते तनोरनवगीतचारुता क नु वा वनेषु तव धर्मचारिता ।
विपरीतवस्तुघटनापटीयसीं धियमेव धिक्तनुलताङ्गि वैधसीम् ॥ ४४

मितजीवितेन हृतराज्यसम्पदा वनभाजितेन किमु राघवेण ते ।
ललने चिरं लल विलोललोचने पतिमाप्य माममितराज्यजीवितम् ॥

क नु ते शिरीषमृदुळं पदद्वयं क नु काशकण्टकसमाचितं वनम् ।
उपयम्य राममिव पद्ममालिका प्रतिभासि वानरकरावलम्बिता ॥४६

इति तेन पापहृदयेन विह्वला समुदीरिता जनकराजकन्यका ।
समवेपताशुगतिना समुद्धता कदळीव हन्त परिदूनमानसा ॥ ४७

परपूरुषेण परिभाषणात्तदा पतिदेवता जनकजा जुगुप्सिता ।
करपल्लवेन वदनं पिधाय साभिदधे निधाय तृणमेकमन्तरा ॥ ४८

अयि राक्षसापशद किं तव द्विधा रसना सुदुष्टवचना न त्रुट्यति ।
अभिमर्ष्टुमिच्छसि हठादिवोरगीमविनीत रामसहधर्मचारिणीम् ॥



समवर्तताथ कदनं महत्तयोर्विपिनान्तवर्त्मनि शकुन्तरक्षसोः ।
न्यपतन्निकृत्तपदपार्श्वपक्षतिः क्षितिजाश्रुभिः सह स वृद्धगृध्रराट् ॥

स. ८, श्लो. ५८, पृ. ७७

अरिभीकरस्य सुगृहीतधन्वनो न हि यावदक्षिपथमेषि रावण ।
यदि जीविते तव जुगुप्सिते स्पृहा सहसाश्रमादपसराशराधम ॥ ५०

इति निर्भयेन मनसाभिधायिनीमथ मृत्युपाशवशगः स मैथिलीम् ।
पललभ्रमेण शुनकः स्रजं यथा बलवज्जहार रजनीचरेशिता ॥ ५१

अतिकर्कशाशरभुजावपाशिता विवशा मृणाळमृदुमुग्धविग्रहा ।
बत हन्त हन्त भयशोककम्पिता कुररीव कुन्दरदना रुरोद सा ॥५२

अहमार्यपुत्र भवतानपायिनी भवता त्वदीयसुखदुःखभागिनी ।
सरसोक्तिभिस्तव मनोविनोदिनी बलवद्ध्रिये दशमुखेन पापिनी ॥

सकृपाणसौनिककरे शकुन्तिकामिव राम रावणकरे ददासि माम् ।
अथवा कठोरहृदयाघहेतवे किमहं दयार्द्रहृदयं ह्युपालभे ॥ ५४

न मया श्रुतं खलु हितं महामते वचनं यदुक्तमनभिज्ञया च ते ।
अधुनैव तत्फलमहोऽनुभूयते ननु राघवानुज मयाद्य रुद्यते ॥ ५५

रुदतीमितीव कुररीव भूसुतां कठिनो हठादिव रथाधिरोपिताम् ।
स नयन्विहायसगतिर्जटायुषा सपदि न्यरोधि करुणार्द्रचेतसा ॥ ५६

अयि राक्षसापशद ते जिजीविषा यदि मुच्यतामियमयोनिसंभवा ।
यदि पौरुषं तव मृधं प्रदीयतामुभयोर्हितं तव तथा विधीयताम् ॥

समवर्तताथ कदनं महत्तयोर्विपिनान्तवर्त्मनि शकुन्तरक्षसोः ।
न्यपतन्निकृत्तपदपार्श्वपक्षतिः क्षितिजाश्रुभिः सह स वृद्धगृध्रराट् ॥५८

स रथं पुनः समधिरोप्य राक्षसः सहसैव बाष्पकलुषीकृतेक्षणाम् ।
दवहेतिकामिव पलाशदाहिनीं स्वपुरीं निनाय यजनावनीभवाम् ॥५९

अवनीसुता स्वपदवीं विचेष्यतामभिधास्यतो गमनरीतिमात्मनः ।
मणिभूषणांशुकगणानवाकिरद्विपिनान्तमार्गमनु तत्र तत्र सा ॥ ६०

अथ भूसुतासहचरो निशाचरं स निहत्य काञ्चनमृगानुकारिणम् ।
परिदूयमानहृदयो मनःप्रियामधिकृत्य सत्वरगतिर्न्यवर्तत ॥ ६१

पथि दुर्निमित्तपरिदूनमानसः समियाय सोदरमपेतरोचिषम् ।
क नु मैथिली कुशलिनी किमङ्ग सा वद लक्ष्मण त्वमिह केन हेतुना ॥

न हि कामतो व्यसृजमार्य भूसुतां प्रहिणोति सा स्म वचनाङ्कुशेन माम् ।
किमहं करोमि वचने स्थितः प्रभो परवानहं खलु तया त्वया च भो ॥

अपि जीवितप्रियतमा सुमध्यमा ननु सौम्य जीवति न वा मनोरमा ।
यदि मां विनाभिमुखमागतोऽसि मे हृदयं ममैव दुरितं विशङ्कते ॥

न खलु प्रमादवशतः प्रियामदाः पललाशिनामनिशमन्तरीप्सताम् ।
अपि घातुकैर्न हि वृकादिभिर्मृगैरशिता त्वया विरहिताश्रमे स्थिता ॥

अपि साश्रमे यदि भवेत्त्वयोज्झिता मम भाग्यलेशवशतः सजीविता ।
किमितीर्यते मम तु भाग्यहीनता भवतीदृशी त्वदसमीक्ष्यकारिता ॥

इति चिन्तयाकुलितमानसः प्रियामसकृत्स्मरन्नवरजञ्च गर्हयन् ।
सहसा प्रियामुखविलोकनोत्सुको जवनो जगाम विजनं निजाश्रमम् ॥

प्रियया विनाकृतमपेतरोचिषं भवनं स दीपरहितं यथाश्रमम् ।
मृगपक्षिसङ्घविरुतैरमङ्गळैर्मुखरीकृतं तमवलोक्य विव्यथे ॥ ६८

हृदयं तु तस्य गतवेपथु क्षणं नयने विमुक्तभुवनावलोकने ।
अवशं शरीरमभवद्विचेतनं तमसीव मग्नमखिलं तपोवनम् ॥ ६९

विगतासुवत्सपदि लक्ष्मणाश्रुणा भुवि हा प्रियेति निपपात मूर्छितः ।
पशुरर्धवैशससुदुःसहव्यथः पुनरुत्थितः पुनरिवापतद्भुवि ॥ ७०

शिशिरोपचारसमवाप्तचेतनो विदितप्रियाविरहदुःखवेदनः ।
प्रथमानशोकमुपसोढुमक्षमो दळयन्रुरोद हृदयं यवीयसः ॥ ७१

विपिने विमुच्य विजने प्रियं जनं जनकात्मजे क नु गतासि हा प्रिये ।
भवतीं विहाय सहधर्मचारिणीमिह देवि का नु मम जीविते स्पृहा ॥

यदि संवृतासि परिहासलालसे दयिते निकुञ्जसदने मदालसे ।
परिहासयोग्यसमयो न खल्वयं सदये प्रियाय तव देहि दर्शनम् ॥ ७३

अथवागृहीतहरिणं निरीक्ष्य मां ननु संवृतासि कुपिता मनःप्रिये ।
न हि देवि कोपसमयोऽयमद्य ते मृगयाश्रमातुरमवेहि मां प्रिये ॥ ७४

ननु हिंसितासि यदि घातुकैर्मृगैः क्षतजोक्षिता न हि मही प्रदृश्यते ।
नियतं ममैव खलु भाग्यसंक्षयादशिता त्वमेव पिशिताशनैर्हृता ॥ ७५

कमलानि भामिनि गतासि पद्मिनीमपि वापचेतुमिभराजगामिनी ।
अथवा गतासि सह सारसाळिभिः सलिले विहर्तुमयि देवि गौतमीम् ॥

न मया वियुज्य दयिते कदाचन प्रसवापचायकुतुकासि हा प्रिये ।
सरसीविहाररसिकापि नैकिका भवती मया गतवती विनाकृता ॥

प्रमदावनायितमिदं भयानकं वसतस्त्वया सह सुखावहं वनम् ।
मणिमन्दिरेऽपि भवतीं विहाय मे वसतिः सुखाय न हि चारुमध्यमे ॥

न मया स्मृता मनसि राज्यविच्युतिर्विरहो न मातुरथ वा पितुर्मृतिः ।
वसता त्वया सह मनोऽनुकूलया सकलं तदद्य हृदयं भिनत्ति मे ॥ ७९

न हि मद्विधो जगति भाग्यदुर्विधो यदहं त्वयास्मि विधिना वियोजितः ।
सुकृतं न कर्म कृतमन्यजन्मनि प्रबलं पुनर्दुरितमेव संचितम् ॥ ८०

विलपन्निताव स निसर्गधीरधीः परिसान्त्वितोऽपि सहजन्मनासकृत् ।
दयितां तदेकहृदयो विचिन्तयन्मनसो न शर्म लभते स्म किञ्चन ॥

दयितावियोगविधुरः परिभ्रमन्परितः सरांसि सरिताश्शिलोच्चयान् ।
रुदितेन वज्रहृदयं विदारयन्निदधौ गभीरकरुणोदधौ न कम् ॥ ८२

दयिताप्रवृत्तिमनवाप्य कुत्रचिद्रुषितो युगान्तसमयानलो यथा ।
सचराचरं जगदिदं शराहतैः स दिधक्षति स्म खरदूषणान्तकः ॥ ८३

कुपितं जगत्त्रयविनाशनाय तं समाधिज्यकार्मुकमुपेत्य पूर्वजम् ।
चरणौ निपीड्य शनकैः स सान्त्वयन्ननुनेतुमेनमुपचक्रमेऽनुजः ॥८४

न विहन्तुमर्हति जगत्त्रयं भवानपराधिनस्तु तव कस्यचित्कृते ।
वसुधाधिपा हि मृदवो भवादृशाः परमा गतिस्त्वमसि सर्वदेहिनाम् ॥

सरितः सरांसि गिरयस्त्विमे मृगास्तरवस्तवाप्रियविधायिनः किमु ।
दयितापहारिणमपास्य राम ते ननु किं प्रयोजनमनागसां वधे ॥ ८६

अवशादिवापतितमार्य धैर्यधीर्व्यसनं विसोढुमिदमक्षमो भवान् ।
यदि निर्वृतिं समुपयान्ति मादृशा ह्यपरे कथं नु भुवने पृथग्जनाः ॥

जगतीदृशं हि सहजं महात्मनां व्यसनं तथापि न बुधो विषीदति ।
विदितं तवैव सकलं मनीषिणो धनुरात्तमार्य सदयावतारय ॥ ८८

विपिने हि कोणपसमूहसेविते पुनरेव भूमितनयां विचिन्वहे ।
रुदितं निरर्थमवधीर्य कार्यधीर्धृतिमेव राम हृदये विधारय ॥ ८९



इत्युक्त्वा चरमं वचः सकरुणं कण्ठावसक्तानसू-
न्वृद्धो रावणबाणभिन्नहृदयो गृध्रो जटायुर्जहौ ।
वीराणां समराङ्गणे विजहतामायुःप्रदातुर्भुवां
तामेवापदनुत्तमां गतिमसौ या सोमपानां गतिः ॥

स. ८, श्लो. १३, पृ. ८१

इति लक्ष्मणेन वचनं सुभाषितं श्रुतिसंप्रदायमवकर्ण्य शर्मदम् ।
प्रससाद रामहृदयं शुगाविलं कतकेन पङ्किलमिवाम्बु नार्मदम् ॥९०

एवं दाशरथिर्विपत्तिसुहृदा सौमित्रिणाश्वासितो
नष्टामिष्टतमामरण्यसरणावन्वेषमाणो मुहुः ।
उत्क्रान्त्युद्यतजीवितं निपतितं भूमौ निकृत्तच्छदं
रक्तं फेनिलमुद्गिरन्तमवशं गृध्रेशमैक्षिष्ट सः ॥ ९१

मन्वानो दयितापहारिणममुं क्रोधाग्निमुज्जृम्भय-
न्संधत्ते निशितं शरासनवरे बाणं जिघांसुर्द्विजम् ।
भो भो राघव ते पितुः सुहृदहं मामन्यथा मन्यथाः
प्राणान्मेऽपजहार हन्त भवतः प्राणप्रियां रावणः ॥ ९२

इत्युक्त्वा चरमं वचः सकरुणं कण्ठावसक्तानसू-
न्वृद्धो रावणबाणभिन्नहृदयो गृध्रो जटायुर्जहौ ।
वीराणां समराङ्गणे विजहतामायुः प्रदातुर्भुवां
तामेवापदनुत्तमां गतिमसौ या सोमपानां गतिः ॥ ९३

रामस्तातसखं निशम्य निहतं सीतानिमित्तं रणे
निर्विण्णो नितरां विलप्य सुचिरं सौमित्रिणाश्वासितः ।
संस्कृत्याथ तमाहिताग्निविधिना दत्त्वा निवापाञ्जली-
न्कष्टेनेष्टतमावियोगविधुरः क्रौञ्चाटवीं प्राविशत् ॥ ९४

तस्मिन्व्याळमृगद्विपद्विजगणैराक्रम्यमाणे वने
नानावृक्षलतावितानसुभगे कासारसंशोभिते ।
अभ्रान्तद्युमणिर्यथा गतविभा बभ्राम स भ्रान्तधी-
रन्विष्यन्सह लक्ष्मणेन दयितामब्जातपत्रेक्षणाम् ॥ ९५

पाताळोदरसोदरीं भयकरीमासाद्य कांचिद्दरीं
रामस्तामधिवासिनीमभिधया रूपेण चायोमुखीम् ।
प्रावृड्दर्शविभावरीसहचरीमैक्षिष्ट नक्तंचरी-
मायान्तीमतिकामुकीमभिमुखं कल्पान्तमेघाकृतिम् ॥ ९६

रुचिररूपमवेक्ष्य तमंसलं रघुवरावरजं रजनीचरी ।
श्रयति सा स्म बलान्मदनातुरा सह रिरंसुरनेन गतत्रपा ॥ ९७

प्रकुपितः स तदीयमदिद्रवच्छुरिकया श्रवणस्तननासिकम् ।
तदनु सेन्द्रियभोगपराङ्मुखी द्रुतवती कृतशूर्पणखासखी ॥ ९८

वनपदं तदतीत्य वनान्तरं श्रितवतोर्गमनं रघुवीरयोः ।
भुवि कबन्ध इति प्रथितोऽरुणद्दनुसुतोऽभिधया च वपुःश्रिया ॥ ९९

उरसिनेत्रयुगं जठरेमुखं तमशिरोधिमसक्थिममस्तकम् ।
असुरमायतबाहुयुगेन तौ नगमिवाक्षतपक्षमपश्यताम् ॥ १००

दनुजबाहुयुगादवपाशितौ विधिवशाद्युगपद्रघुनन्दनौ ।
धृतिमथापि विधार्य निकृन्ततः कदळिकाण्डमिवास्य भुजद्वयीम् ॥

दिशो दश विनादयन्दनुसुतो यथा नीरद-
शिलोच्चय इवोच्छ्रितो मखवता निकृत्तच्छदः ।
विलून इव किंशुकः कुसुमितोऽस्रधाराप्लुतः
पपात सहसाभुजो भुवि निकृत्तबाहुद्वयः ॥ १०२

स्मृत्वाभिशापमसुरः स तदा मघोनस्तस्यावसानमपि राघवदर्शनान्तम् ।
व्यज्ञापयत्तदखिलं निजपूर्ववृत्तं रामाय राक्षससमापनकारणाय ॥

विज्ञापितासुरपुरातनजन्मवार्तः पिण्डीकृतं तमवटे महति प्रवेश्य ।
काष्ठैर्यथाविधि चितां परिकल्प्य शुष्कैरग्निं यथाभिलषितं प्रददौ स रामः

तदनु दनुसुतोऽसावुत्थितोऽभूच्चिताग्ने-
र्विधृतविमलचेलस्रग्विभूषाविशेषः ।
दिवि भवमधितिष्ठन्राजमानं विमानं
रघुवरमभिधत्ते जानकीप्राप्त्युपायम् ॥ १०५

दशरथनृपसूनो ज्यायसा राज्यहेतो-
र्वनभुवमवकृष्टः प्रेयसीविप्रयुक्तः ।
त्वमिव मिहिरसूनुः कोऽपि सुग्रीवनामा
सह चरति चतुर्भिर्वानरैर्ऋश्यमूके ॥ १०६

नरवर समधर्मा निष्प्रतिद्वन्द्वकर्मा
विदितभुवनवार्तो विप्रयोगव्यथार्तः ।
स हि तव कृतसख्यो वानरानीकमुख्यो
विरचयति सहायं प्रेयसीमार्गणेऽयम् ॥ १०७

इति स दनुजसूनू रामसंदर्शनेन
प्रतिहतमुनिशापः प्राप्तदिव्यस्वरूपः ।
रघुवरमभिधाय प्रेयसीप्राप्त्युपायं
स्वपदमनुरुरोधामन्त्र्य सीतासहायम् ॥ १०८

तदनु दनुसुतेनादिष्टवर्त्मानुयान्तौ
रुचिरतरमतङ्गारण्यमासेदतुस्तौ ।
इह शबरपुरन्ध्री राघवं द्रष्टुकामा
मुनिजनवरिवस्योपात्तसंपूर्णकामा ॥ १०९

विनयविनतगात्रौ तौ महाराजपुत्रौ
युगपदवतरन्तौ गां यथा पुष्पवन्तौ ।
उत मदनवसन्तौ मूर्तिमन्तौ विशन्तौ
जरठशबरसाध्व्या ह्याश्रमं धर्मबुद्ध्याः ॥ ११०

सपदि शबरसाध्वी सा सुधासारमाध्वी-
समरसफलकन्दैः सार्धमानन्दकन्दैः ।
नतिनुतिततिपूर्वं राघवायोपहारं
समजनि कृतकृत्या कल्पयित्वातिभक्त्या ॥ १११

सा रामदर्शनसमापितजीवितार्था
साध्वी समिद्धमरणीतनयं प्रविश्य ।
शुश्रूषिताः स्वगुरवो विहरन्ति यत्र
स्थानं तदेव मुदिता सहसा जगाम ॥ ११२

रामोऽपि तच्चरितविस्मयमानचित्तः
सौमित्रिणा सह ततः सहसा निवृत्तः ।
तां विप्रयोगिजनचित्तविभेदिशम्पां
पम्पामवाप विरहज्वरजातकम्पः ॥ ११३

इति श्रीमद्वाधूलकुलजलधिकौस्तुभस्य श्रीमन्मार्गसहायशास्त्रिणस्तनूजस्य
श्रीमत्सुब्बाम्बागर्भशुक्तिमुक्तामणेः श्रीसुन्दरेश्वरस्य
कृतौ सुन्दररामायणकाव्ये
अष्टमः सर्गः

## ॥ अथ नवमः सर्गः ॥

श्रीमत्याः सरसिजषण्डमण्डितायाः पम्पायाः प्रचुरमराळसारसायाः ।
कूजद्भिर्मधुरमुपाश्रिता विहङ्गैर्वासन्ती तटभुवमाससाद लक्ष्मीः ॥ १

माकन्दस्तबकपयोधराभिरामा वानीरप्रथितनवीनहीरहारा ।
आपादात्कुसुमितकिंशुकाङ्गरागा व्याकोचप्रविमलमल्लिकावतंसा ॥ २

संफुल्लद्विमलसरोजहल्लकाक्षी सा लोध्रप्रसवदुकूलसंवृताङ्गी ।
काल्येषद्विकसितकुन्दमन्दहासा बालेवोल्लसति नितम्बिनी नवोढा ॥

प्रत्यग्रप्रसवविभूषणाञ्चितायां माधव्यां मधुनवसङ्गमोद्यतायाम् ।
आळीनामिव मधुरं पिकावळीनामानन्दाच्छ्रुतिसुखगीतमाविरासीत् ॥

सम्भोगप्रभवसुखानुभूतिलिप्सोर्वासन्त्या प्रियतमया मधोर्हि लक्ष्म्या ।
संपुष्णन्रतिसुखमस्य गन्धवाहः पम्पायाः सरसिजमामृशञ्चिखेल ॥

आहूतो मधुरवचोभिरन्यपुष्टैरारूढो मलयमरुन्महद्विमानम् ।
माधव्या सह नवसङ्गमं दिदृक्षुः पुष्पेषुः सपदि समाजगाम सख्युः ॥

अन्योन्याभ्युदयमहं विवर्धयन्तौ द्वावेतौ मधुमदनौ मिथः समेतौ ।
ब्रह्मेन्द्रप्रभृति समस्तसृष्टिजातं तन्वाते सुखतरमात्मनो विधेयम् ॥ ७

स स्थाणुं मदनसखः सपर्णमेकं सापर्णं मधुसचिवश्चकार चान्यम् ।
तावेतौ युगपदहो मिथःसहायादेकस्मिन्नजनयतां विचित्रवृत्तिम् ॥ ८

संयोगं सह मधुना समेत्य चित्ते सत्त्वानां कुसुमशरो रतिं विधत्ते ।
हा हन्त प्रियतमया वियोगभाजां पान्थानामदयमयं मनः क्षिणोति ॥

तिर्यञ्चौ रतिसुखमत्र निर्विशन्तौ पम्पायास्तटमनु कानने मनोज्ञे ।
संपश्यन्प्रियतमया तया वियुक्तो रामोऽपि स्मररुचिरः स्मराभियुक्तः

आत्मानं स खलु जिगाय देहकान्त्या रामोऽसाविति तमिमं पराजिगीषुः
पञ्चेषुः सपदि स कान्तया वियुक्तं पञ्चानामकृत शरव्यमाशुगानाम् ॥

विश्लेषप्रभवसुदुःसहव्यथोऽपि प्रेयस्याः कुसुमशराहतिव्यथार्तः ।
श्रीरामो हृदयसखीं स्मरन्नुदश्रुः सौमित्रिं विपदि सखायमेवमाख्यत्

सौमित्रे नयनविलोभनीयमेतत्पंपायाः कुसुमितकाननं प्रपश्य ।
कालोऽयं प्रचुरमनोभवो वसन्तश्चित्तं मे विकलयतीव हन्त हन्त ॥

उन्मत्तभ्रमरविलीनपूर्वभागा ह्यानम्रा मसृणसपल्लवाम्रगुच्छाः ।
दृश्यन्ते भुवनमनोविमोहनास्ते पुष्पेषोरिव सविषाश्शराः सपत्राः ॥

नत्यूहभ्रमरपिकस्वनस्वनोऽसौ सौमित्रे रुचिरतराम्रपल्लवार्चिः ।
आध्मातो मलयसमीरणेन सीतास्नेहार्द्रं प्रदहति मां वसन्तवह्निः ॥ १५

पर्याप्तं विकचसरोजदिव्यगन्धानाजिघ्रन्समधिकसेवयेव शौधोः ।
पम्पायास्तनुतरवीचिषु स्खलन्सन्मत्तोऽसौ मदयति मां च गन्धवाहः

वृन्तेभ्यो विगळयति प्रसूनराशीन्पश्यासौ मयि सदयो मधूकवृक्षः ।
मां वीक्ष्य प्रियजनविप्रयोगदूनमुद्बाष्पं सपदि विमुञ्चतीव बाष्पम् ॥

यद्यन्मे नयनसुखाय पूर्वमासीत्प्रेयस्याः सविधमुपेयुषश्च तस्याः ।
तत्तन्मे समजनि लोचनव्यथायै वामाक्ष्या प्रियतमया वियोजितस्य ॥

आपन्नो न हि भवतीह मादृगन्यो मूर्धन्यो वृजिनकृतामितीव मन्ये ।
जीवामि क्षणमपि जीविताथहेतुं जीवातुं मम विरहय्य जीवितस्वम् ॥

दीर्घाक्षं वदनसरोजमिन्दुकान्तं व्यालोलत्कुटिलसितेतरालकान्तम् ।
आदर्शप्रतिमकपोलमण्डलं ते पश्येयं पुनरपि हा कदा नु कान्ते ॥ २०

मञ्जीरक्वणितमिषेण शिक्षयन्ती क्रीडाळीः पुलिनतलेषु राजहंसीः ।
आत्मीयं गमनविलासमाप्रबोधाद्भूयो मे नयनसुखं कदा नु कुर्याः ॥

माधुर्यादधरितमृद्विकं म्रदिम्ना पाषाणीकृतनवनीतमर्थपुष्टम् ।
स्कन्नं तद्गळदमृतं वचोऽधरात्ते श्रोष्यामि श्रवणसुखं कदा नु कान्ते ॥

कस्तूरीकलितपटीरपङ्कलेपं सर्वाङ्गे मनसि नवामृताभिषेकम् ।
भूयोऽहं तव वितनोमि रागबन्धादाश्लेषं परमसुखं कदा नु कान्ते ॥

मर्यादातिगविरहाधिमग्नचित्तं प्रेयस्यां प्रहिततदेकतानचिन्तम् ।
विस्मृत्य प्रकृतविधेयमेवमार्यं सौमित्रिः सपदि स सान्त्वयन्नवादीत् ॥

आर्य त्वं रघुकुलवीर धीर विद्वन्नात्मानं किमिति न बुध्यसे महात्मन् ।
धीमन्तो विपदि भवादृशा महान्तो व्यामोहं न हि भुवने व्रजन्ति सन्तः

उत्साहः पुनरवलम्ब्यतां प्रयत्नादुत्साहो ननु मनसः सुखैकहेतुः ।
उत्साहान्न हि बलमन्यदस्ति पुंसामुत्साही न खलु विषीदति स्वकार्ये

अश्रान्तं मनसि विधूमितं प्रियायाः प्रध्मातं स्मृतिमरुता वियोगजन्यम्
दुर्दामं हृदयविदाहिनं प्रयत्नाद्दुःखाग्निं शमय विभो विवेकवारा ॥ २७

इत्येवं हितमनुजन्मना यदुक्तं पथ्यं तद्धृदयसुखं निशम्य वाक्यम् ।
संयम्य प्रियजनविप्रयोगदुःखं सुग्रीवं समगमदृश्यमूकसंस्थम् ॥ २८

विक्रान्तौ नृपतनयौ वरायुधौ तौ सूर्येन्दू गगनतलादिवावतीर्णौ ।
सुग्रीवश्चकितमतिर्निरीक्ष्य चारौ प्रच्छन्नौ हरितनयस्य शङ्कितोऽभूत् ॥

दुद्राव प्लवगगणैस्ततोऽनुयातैश्शार्दूलं मृग इव वीक्ष्य भीतभीतः ।
संक्षोभं जनयति कस्य वा न चित्ते नामापि प्रबलरिपोरनार्यबुद्धेः ॥

मा भैषीरिति निगदन्वयस्य धीमानुद्विग्नं प्रियसचिवस्तदाञ्जनेयः ।
सुग्रीवं सरभसमेत्य धीरचित्तः संभ्रान्तं सपदि स सान्त्वयन्नवादीत् ॥

एतौ तावभिमुखमागतावभीतौ दृश्येते धृतधनुषौ तपस्विवेषौ ।
पुण्यान्ते त्रिदिवपदान्महोविशेषौ राज्याद्वा त्वमिव विधेश्च्युतौ विपाकात्

नानार्यं धृतधनुषोस्तयोस्तनुश्रीर्वक्त्रश्रीरपि विवृणोति चित्तभावम् ।
सन्तापं किमिव निदाघतापहन्ता जीमूतो जनयति कार्मुकाभिरामः ॥

वृत्तान्तं सपदि तयोस्त्वयानुपूर्व्यादज्ञात्वा प्रिय हृदये भयं न कार्यम् ।
मित्रं वा पुनरथ वा भवेत्स शत्रुराभाष्यः खलु विदुषस्तवाभियातः ॥

आपत्तौ तव सहजं गृहाण धैर्यं संभ्रान्तं सपदि सखे स्तभान चित्तम् ।
भीतानां हरितनयात्तवानुगानामुत्साहश्रियमतुलां पुषाण भूयः ॥ ३५

तिष्ठ त्वं प्लवगवरैस्तवानुयातैः स्वस्थः सन्मनसि विहाय वालिशङ्काम् ।
आदेशो यदि भवतस्तयोर्यथार्थं वृत्तान्तं सपदि समानयामि तावत् ॥

ईदृग्भिः प्रियवचनैर्हितोदितैस्तैराश्वास्य प्लवगपतिं प्लवङ्गवीरः ।
आपृच्छ्य द्रुतममुमात्तभिक्षुवेषः श्रीरामं श्रितहितकाममभ्युदस्थात् ॥

अभ्यर्णं सपदि तयोः स राजसून्वोः सुग्रीवप्रणिधिरुपेत्य लब्धवर्णः ।
गैर्वाणीमधरितफाणितां च वाणीमाश्रित्य प्रणतिपुरःसरामफाणीत् ॥

आयान्तौ मधुमदनौ शरीरवन्तौ कान्ताराश्रियमवलोकितुं भवन्तौ ।
आहोस्वित्किमु युगपन्महीमटन्तौ राजन्तौ दिवि पृथगेन पुष्पवन्तौ ॥

चीरं वां वपुषि करे तु चण्डचापः कौमारे वयसि कथं महर्षिवृत्तिः ।
कान्तारे भयजनके वनेचराढ्ये संचारः कथमिव कौ युवां युवानौ ॥

दृश्येते मुनितनयौ सवल्कलत्वाद्राजन्यौ करधृतचण्डचापवत्त्वात् ।
एकस्मिन्युगपदहो कथं प्रसक्तं व्यत्यस्तं भुवनतले रजश्च सत्त्वम् ॥

शापाद्वा किमु युवयोरुतेच्छया वा वेषोऽयं वनभुवि सा च पर्यटाख्या
दायादैरपहृतभाग्यराज्यवत्त्वादाहोस्वित्प्रियजनविप्रयोगदुःखात् ॥ ४२

सुग्रीवः कपिकुलनायको महात्मा भ्रात्रासौ हरितनयेन विप्रलब्धः ।
राज्येन प्रियतमया च विप्रयुक्तः शैलेऽस्मिन्वसति सहानुगैः प्लवङ्गैः ॥

तस्याहं सचिववरः समीरसूनुर्विख्यातो दिवि भुवि नामतो हनूमान्
धर्मात्मा स खलु समं युवा युवाभ्यां सौहार्दं निरुपधि काङ्क्षते युवभ्याम्

मोचाया मदमवधीरयद्विपङ्क्त्या वाचां वा त्रिदशगुरोरखर्वगर्वम् ।
श्रुत्वैवं हृदयसुखं वचस्तदुक्तं सौमित्रिः प्रतिबदति स्म वावदूकः ॥

विख्यातो दशरथ इत्यभून्महात्मायोध्यायां किल रघुवंशसार्वभौमः ।
तस्यासौ खलु तनयो ममाग्रजन्मा रामाख्यस्त्वमिव हि शीलतोऽभिरामः

साम्राज्यादवरजभागधेयवर्ज्यात्प्रभ्रष्टो वनमिह जायया प्रविष्टः ।
जाया सा दयिततरास्य राज्यलक्ष्म्याः केनापि स्रगिव शुनाशरेण जह्रे

को वासौ क्व नु गतवान्स दारचोरोऽजानन्तौ विपिनमिदं चिरादटन्तौ
आख्यातौ दनुतनयेन मार्गमध्ये सुग्रीवं शरणमितं युवामितीव ॥ ४८

सुग्रीवं सपदि शरण्यमावयोस्तं कार्यार्थं रवितनयं वने विचिन्वः ।
यत्रास्ते स खलु महान्विपन्नमित्रं तं देशं ननु दयया नयाञ्जनेय ॥४९

याद्दच्छी तव खलु दर्शनोपलब्धिः प्रागेव प्रकटयतीव कार्यसिद्धिम् ।
मित्रे सत्युदयिनि सारुणी प्रभाते प्रागेव प्रसरति भास्तमोनिहन्त्री ॥

राजन्यौ रवितनयं जगच्छरण्यौ वृण्वानौ शरणमितीव तौ युवानौ ।
कापेयं निजमधिरोप्य पृष्ठदेशं सुग्रीवान्तिकमनयत्तदाञ्जनेयः ॥ ५१

अन्योन्यं सपदि समागृहीतपाण्योरन्योन्यं समभिहितप्रियाप्रवृत्त्योः ।
अन्योन्यं हरिनरवीरयोरभेद्यं वाय्वग्न्योरिव घटयाञ्चकार सख्यम् ॥

सुग्रीवो जनकसुतां च यातुनीतामन्वेष्टुं प्लवगवरैस्तदाचिरस्य ।
रामश्च स्वयमपि वालिनं निहन्तुं चक्रातेऽवितथगिरावुभौ प्रतिज्ञाम् ॥

सुग्रीवस्तदनु स सीतया विसृष्टान्यानीयांशुकमणिभूषणान्यदत्त ।
संपश्यन्स हि रुदितैरमून्युदश्रुः श्रीरामो हृदयमभिन्त हन्त सख्युः ॥

आश्वस्तस्तदनु रघूद्वहः सखायं सोऽपृच्छद्धरितनयेन वैरहेतुम् ।
व्याचख्यौ रवितनयोऽपि दुन्दुभेस्तं वृत्तान्तं सपदि विरोधहेतुभूतम्

सुग्रीवे हरितनयस्य निग्रहालङ्कर्मीणे स्वभुजबलेऽपि संदिहाने ।
पृथ्व्यस्थि प्लवगवरेरितं पदाग्रात्काकुत्स्थः क्षिपति स दुन्दुभेः सुदूरम्

निर्जीवास्थिविसरतोलनादतृप्तः सुग्रीवो रघुवरमेष पृच्छति स्म ।
भेत्तुं चेत्प्रभवसि राम सप्तसालान्विस्रब्धस्तदनु पराक्रमे तव स्याम्

निर्दिष्टान्प्लवगवरेण सप्तसालाँल्लीलातः शतशकलं सकृच्छरेण ।
सन्देहं हृदि सुदृढं निरूढमूलं सोऽभैत्सीद्युगपदरातिभीषितस्य ॥५८

दृष्ट्वैतन्निरुपमकर्म कीशवीरो विश्वस्तो रघुवरविक्रमे तदानीम् ।
प्रायासीद्विगतभयः स ऋश्यमूकात्किष्किन्धां सरघुवरोऽरिनिग्रहार्थम्

आकारस्वरगतिविक्रमस्वरूपैः सोदर्यौ समिति यतः सरूपरूपौ ।
सुग्रीवं सपदि तयोर्विवेक्तुमस्य ग्रीवायां कुसुममधीधरत्स रामः ॥ ६०

अन्योन्यं वनचरवीरयोः प्रवृत्ते संग्रामे सति जयकामयोः सुभीमे ।
श्रीरामश्चमितमवेक्ष्य मित्रमाजौ मित्रार्थं सपदि जघान मित्रशत्रुम् ॥

रामस्याशुगनिहतस्तु हेममाली शाखीव क्षितिपतितस्ततः स वाली ।
साक्षेपं हृदयभिदाशुगव्यथार्तो व्याहर्तुं रघुवरमित्युपाक्रमिष्ट ॥ ६२

युक्तं किं तव हननं पराङ्मुखानां सर्वज्ञस्त्वमसि कुलीनधर्मविज्ञः ।
अभ्यस्तः क नु भवताथ वा नवीनः क्षात्रोऽयं रघुवरसार्वभौम धर्मः ॥

ख्यातस्त्वं भुवि सुगुणैः सतां गणेयैर्युक्तं ते हननमनागसां किमङ्ग ।
लोकेऽस्मिन्नसति कदापि वैरहेतौ कोऽप्यन्यस्त्वामिव निरागसं निहन्ति

सार्धं मत्सदृशबलेन युध्यमानं भ्रात्रा मद्वधमपि काङ्क्षताहितेन ।
मामेवं त्वयि तु निरागसं निहन्तुं युक्तं किं कथय महाकुलप्रसूत ॥

निर्णीता यदि मृगयापि पार्थिवानां नाभक्ष्यं नृपतिवरो हिनस्ति सत्त्वम्
जानासि त्वमपि कपिर्न कस्य भक्ष्यो मां हत्वा रघुवर किं फलं लभेथाः

राज्यश्रीरनयवतामुना विषीदेत्साध्वीव व्यभिचरता शठेन भर्त्रा ।
इत्थं त्वां दशरथराडनार्यशीलं प्राहैषीत्किमु विपिनं विचिन्त्य साधु ॥

युध्यथा यदि पुरतो मम स्थितः सन्सद्यस्त्वं यमसदनं हतः प्रपश्येः ।
उन्निद्रं ह्यहिरिव शीधुपानमत्तं किं कुर्वे जघनिथ मामदृश्यरूपः ॥ ६८

धिग्धिक्त्वां रघुकुलपांसनं नृशंसं धिग्धिक्ते प्रसृतमनागसि प्रभावम् ।
कृत्वेदं रघुवर कर्म साधुगर्ह्यं सव्रीडं किमिति शिरस्त्वधो न कुर्याः ॥

सुग्रीवप्रियमनुसृत्य यन्निमित्तं राजन्यब्रुव निजघन्थ मां परोक्षे ।
मामेव प्रथममुपेत्य संदिशेश्चेत्सद्योऽहं तव दयितां विचित्य दद्याम् ॥

इत्युक्त्वा विरमति वालिनि प्ररूक्षैः साक्षेपैः सपदि सहेतुकैर्वचोभिः ।
तत्कालोचितमनुचिन्त्य सामगर्भं व्याचख्यौ प्रतिवचनं स वालिहन्ता

कृत्वा त्वं कलुषतरं हि कर्म निन्द्यं मूढात्मन्किमिति विकत्थसे प्लवङ्ग ।
को वास्मिन्जगति महाजनस्त्वदन्यो जायायां व्यभिचरति स्वसोदरस्य

धर्मात्मन्यवति सतीह सागरान्तां गामेतां ननु भरते सशैलदुर्गाम् ।
नाधर्म्यं क्वचिदपि राजदण्डभीतो दुष्कार्यं स्मरति जिजीविषुस्त्वदन्यः

दुष्टानां विनियमने भवादृशानामादेशादिह नृपतेर्वयं चरामः ।
पापात्मन्सहजपरिग्रहे रतस्त्वं वध्यः स्याः किमिव न मादृशां प्लवङ्ग ॥

सोदर्यां दुहितरि मातरि स्नुषायां नान्यः स्याद्व्यभिचरतो वधाद्धि दण्डः
आदेशान्नृपतिवरस्य दण्डितस्त्वं मुक्तः स्याः स्वकृतमहैनसः प्लवङ्ग ॥

युक्त्यैवं प्लवगवरः स सान्त्ववाचा प्रत्युक्तो रघुपतिना बहुश्रुतेन ।
दुष्कर्म स्वकृतमवेत्य रामवध्यमात्मानं नियतममन्यतानुतप्तः ॥ ७६

अज्ञानात्स्वकृतमहैनसो विमुक्तो मुक्तेनोरगसदृशेन ते शरेण ।
त्वद्द्रोहाजनितमहागसो यथाहं मुक्तः स्यां सपदि विभो तथा प्रसीद ॥

इत्युक्त्वा हरितनयो रघुप्रवीरं तेनासौ सदयहृदा प्रसादितः सन् ।
प्रेयोभिः सुतहितजीवितैर्विमुक्तो धीराणां सुगतिमगान्मृधे हतानाम् ॥

आश्वास्य प्रियजनविप्रयोगदूनांस्तारेयप्रमुखवलीमुखान्स रामः ।
सुग्रीवं सपदि यथाविधि स्वराज्ये तारेयं समभिषिषेच यौवराज्ये ॥

इत्येवं स रघुवरः कृतां प्रतिज्ञामापूर्यावितथवचाः कृतार्थ आसीत् ।
सुग्रीवो निजकृतमाश्रुतं पुपूर्षुर्वर्षर्तोरपगममाशु काङ्क्षति स्म ॥ ८०

पुनरधिगतराज्यो जायया योजितः स-
न्नसर्पदि स कपिवीरो निर्भरानन्दमग्नः ।
समदिवसनिशीथं निर्विशन्कामभोगं
न खलु दिवसरात्र्योरन्तरज्ञो बभूव ॥ ८१

नृत्यन्मत्तमयूरनादमुखरे नित्यं स्रवन्निर्झरे
तत्र प्रस्रवणे गिरौ सह विपन्मित्रेण सौमित्रिणा ।
रामस्त्विष्टतमावियोगविधुरो वर्षानिशा दुःसहाः
सुग्रीवापगयोः प्रसादमचिरादाशंसमानोऽनयत् ॥ ८२

इति श्रीमद्वाधूलकुलजलधिकौस्तुभस्य श्रीमन्मार्गसहायशास्त्रिणस्तनू-
जस्य श्रीमत्सुब्बाम्बागर्भशुक्तिमुक्तामणेः श्रीसुन्दरेश्वरस्य
कृतौ सुन्दररामायणकाव्ये
नवमः सर्गः

## ॥ अथ दशमः सर्गः ॥

गुहां प्रविष्टेऽथ वनालयाधिपे रघूद्वहे प्रस्नवणं समाश्रिते ।
उभावुपातिष्ठत शक्रशासनादितीव वर्षासमयः सुधामयः ॥ १

तदाज्ञयेव त्रिजगद्धिताय सा समन्ततः प्रावृडियं व्यजृम्भत ।
सतां विभूतिः स्वसुखाय केवलं न कल्पते स्वाश्रयिणां नृणामपि ॥

निदाघतप्ता समहीधरा मही निरस्तशोभा गतसस्यभूषणा ।
उपेक्षणीया न हि सेति तां शनैरजीवयद्द्यौर्नववारिबिन्दुभिः ॥ ३

निदाघतप्ता वसुधा सुधामयैर्नवोदबिन्दुप्रकरैः परिप्लुता ।
भृशं पिपासाकुलितेव हन्त सा पुनः पुनर्निश्वसितं विमुञ्चति ॥ ४

अहीनतापां समहीधरां महीं निरन्तरापादितवर्षधारया ।
प्रियां सकामामुपगूहनैरिव प्रियः समाप्याययति स्म वारिदः ॥ ५

सनीरमेघोदरनिर्गतो मरुत्सुगन्धसौगन्धिककेतकादृतः ।
सुशीतलः स्पर्शसुखो विहायसं विहाय वाति स्म भुवः सुखाय सः ॥

सुधायमानाधिकवर्षधारया धरा निकामं शिशिरीकृता सती ।
जगद्धितायाजनि रत्नगर्भिणी स्वयं हि तीर्णः स परांश्च तारयेत् ॥ ७

तदेन्द्रगोपाञ्चितनूत्नयावका कदम्बसर्जार्जुनपुष्पभूषणा ।
ससस्यकेदारहरित्प्रभांशुका विराजते चारुतरा वसुन्धरा ॥ ८

पुनश्च तिग्मांशुकरप्रसारणं भुवो हि सौन्दर्यविनाशकारणम् ।
निषेद्धुकामैरिव नीलनीरदैर्नभोऽवकाशो निबिरीसमावृतः ॥ ९

यतो यतश्शीतकरोऽपि दृश्यते ततस्ततः प्रेरितचञ्चलेक्षणाः ।
वसुन्धरारक्षणजातसंभ्रमा भ्रमन्त्यहंपूर्विकयेव वारिदाः ॥ १०

समन्ततः स्निग्धसनीरवारिदैर्महान्धतामिस्रनिभैस्तिरोहिते ।
नभोऽवकाशे तु नभोनभस्ययोर्जना न जानन्ति गतिं नभोमणेः ॥ ११

निलीयमानैर्विहगैर्निमीलितैः सरोरुहैर्नूतनमालतीसुमैः ।
महीसुरास्त्वस्तमयं विवस्वतो विभाव्य सन्ध्यां चरमामुपासते ॥ १२

महानदी भर्तृसमागमाच्चिर वियोजिताऽग्रहदुग्रहैः कृशा ।
अवग्रहे वारिधरैर्निवारिते पुनः स्वभर्तारमनुद्रुतेव सा ॥ १३

दिने दिने सा पयसाभिवर्धिता बलावलेपादिव कूलपातिनी ।
स्वबाहुकूलङ्कषपीवरस्तनी पतिं प्रयातीव जवेन कामिनी ॥ १४

सचक्रवाकाः सबलाकमालिकाः सफेनसङ्घाः सतमालपत्रकाः ।
महापगाः संप्रति सागरोन्मुखा यथा चिरप्रोषितभर्तृकाः स्त्रियः ॥ १५

अवेत्य भर्तारमिवान्यकामिनं परस्पराक्रोशपरा इवापगाः ।
वहन्त्यहंपूर्विकयेव कल्मषा जवेन कोपाकुलिता इव स्त्रियः ॥ १६

महीध्ररुद्धा अपि विघ्निता द्रुमैः पथि स्खलन्त्योऽपि शिलासु निम्नगाः ।
वहन्त्यपश्चान्मुखमेव सत्वरं चिराय दृष्टप्रियसङ्गमोत्सुकाः ॥ १७

कृताभिषेका इव वारिधारया घनाजिनप्रावरणा महीधराः ।
नदद्रुहाः प्रस्रवणोपवीतिनो द्विजा इवाध्यायपरा विभान्ति ते ॥ १८

जलातिभारश्रमितान्वलाहकानितस्ततः प्रस्खलितान्महीभृतः ।
नितम्बदेशे पतितांश्च पादयोर्वहन्ति मूर्ध्नाद्य पुरोपकारिणः ॥ १९

वनान्तभूमिर्नववारिसंप्लुता सशक्रगोपाकुलशाद्वलाञ्चिता ।
रसालहिन्तालतमालशोभिता प्रफुल्लसुस्निग्धलताधिवासिता ॥ २०

क्वचिद्दुलीदर्दुगणैर्निषेविता क्वचिच्च मत्तद्विपबृन्दबृंहिता ।
क्वचित्पतत्रिप्रकरैः प्रणादिता क्वचिच्च नृत्यच्छिखिसङ्घशोभिता ॥ २१

अनेडमूकैः स्तवनीयशोभया श्रिया तथान्धैरपि दर्शनीयया ।
विराजमाना विपिनान्तभूरियं विभाति तौर्यत्रिकशालिकेव सा ॥ २२

प्रियासखस्यापि वने न कस्यचित्तथाविधे तादृशनीरदागमे ।
मनो मनोजस्य वशंवदं भवेत्प्रियावियुक्तस्य पुनः किमुच्यते ॥ २३

तथाविधं काननरामणीयकं समीक्षमाणो नयनव्यथाकरम् ।
मनो निगृह्य प्रसभं तु राघवो नयत्यहो वार्षिकदुर्दिनानि सः ॥ २४

दिने दिने वीतघनं नभोऽङ्गणं विपक्वकेदारकमम्बु निर्मलम् ।
मृदुश्च वायुर्विमलः कलानिधिः शशंस रामाय शरत्समागमम् ॥ २५

ततो विनिष्पीडितसारघाश्रयोपमं सतूलप्रतिमं शरद्घनम् ।
तनीयसीं चालसगामिनीं नदीं प्रियोपभुक्तोज्झितकामिनीमिव ॥ २६

समीक्ष्य रामो हृदयस्थितामपि प्रियां विचिन्त्य प्रथमानशोकतः ।
विमुच्य धैर्यं हृदयं यवीयसो विमुक्तकण्ठं विललाप दारयन् ॥ २७

निशम्य काल्ये कलहंसकूजितं पुरा प्रबुद्धा कलहंसभाषिणी ।
मया विना संप्रति दुःखदुःखिता प्रिये न जनामि कथं प्रबुध्यसे ॥ २८

सुपुष्पितान्काञ्चनसन्निभासनानवेक्षमाणा दयितेऽनवेक्ष्य माम् ।
वने विहर्तुं क्षमसे कथं नु वा क्षमेऽथ वा त्वां विरहय्य जानकि ॥

सुधायमानं ननु सन्निधिं प्रिये विहाय ते शारदचन्द्रिकानिभम् ।
वने चरन्रम्यसुपुष्पितद्रुमे मनोविनोदं न लभे शशिप्रभे ॥ ३०

विचिन्तया दुःसहया परीवृतं रुदन्तमेवं समवेक्ष्य पूर्वजम् ।
विषादमापद्य हिताभिरुक्तिभिः शनैः समाश्वासयति स्म लक्ष्मणः ॥

शरद्विलासं परितः प्रसारितं स सूरसूनोः समयव्यतिक्रमम् ।
विलोक्य सीतां पुनरेव चिन्तयन्नुवाच सौमित्रिमितीव राघवः ॥ ३२

समं विभक्ता गगने वनावनौ जलाशये सूर्यशशाङ्ककान्तिषु ।
अहो शरच्छ्रीः सकलाङ्गसुन्दरी मनो मदीयं हरतीव मैथिली ॥ ३३

मषीकृतं प्रावृषि नीलनीरदैर्नभोऽजिरं बन्धुरकर्दमाचितम् ।
सुधाकरेणैव सुधाविलेपितं समीकृतं च प्रतिभाति संप्रति ॥ ३४

घनैर्वियुक्ता विमला दिशश्च ता विभान्ति शीतांशुकरैर्विशोधिताः ।
पटाञ्चलैर्माजितसान्द्रपांसवः शरच्छ्रियो विभ्रमदर्पणा इव ॥ ३५

क्वचित्क्वचिद्व्योमनि सारदुर्विधा विलम्बमाना विगतस्वना घनाः ।
दिवा खरांशुप्रकरेण निर्धुता लघुर्न कस्यापि हि गौरवास्पदम् ॥ ३६

नभो निरीक्ष्याम्बुधरैर्वियोजितं विमुक्तबर्हाभरणास्तु बर्हिणः ।
वनावनौ वा सरितां तटे शुचा ह्यहं यथा ध्यानपरा भवन्ति ते ॥ ३७

नदीजलं संप्रति वीतकल्मषं सतां मनो योगवतामिवामलम् ।
रथाङ्गकारण्डवहंससारसैर्निषेवितं साधु सतां मतैरिव ॥ ३८

जलाशयाः संप्रति फुल्लपङ्कजा रथाङ्गकारण्डवहंसशोभिताः ।
नभोविभागा इव मुक्तवारिदा विभान्ति ते सग्रहचन्द्रतारकाः ॥ ३९

वनावनौ षट्चरणाः प्रियान्विताः प्रकामपुष्पासवपानदर्पिताः ।
रुवन्ति पद्मासनरेणुरूषिता नवाभिषिक्तः प्लवगाधिपो यथा ॥ ४०

अदृश्यरूपो मदनो ममासुहृल्लतागृहे कैरवपद्मसद्मनि ।
निशातशीतांशुकरे क्षणे क्षणे क्षिणोति मां लक्ष्मण पञ्चभिश्शरैः ॥

नदीस्तटाकानि सरांसि वापिका जलेन संपूर्य विधाय वारिदः ।
महीमहीनार्धिमभूत्तिरोहितो विचित्रमेतद्धि विचेष्टितं सताम् ॥ ४२

कृतोपकारस्तु वनालयाधिपश्चिराय स ग्राम्यसुखेषु सक्तधीः ।
कृतां प्रतिज्ञां शरणार्थिनं च मां न हि स्मरत्येतदनार्यचेष्टितम् ॥ ४३

इतो गतस्त्वं ननु काममोहितं प्रदर्श्य रूपं कुपितस्य यादृशम् ।
प्रबोध्य चापध्वनिना मनोभिदाभिधेहि वाचा मम वानराधमम् ॥ ४४

कृतां प्रतिज्ञामकृतज्ञ मादृशाननार्य विस्मृत्य वनालयाधम ।
निषेवसे ग्राम्यसुखं दिवानिशं प्रपश्यसि त्वं सहसैव तत्फलम् ॥४५

त्वदग्रजो येन गतो मया हतस्तमेव पन्थानमविज्ञ मानुगाः ।
तमेकमेव न्यवधीन्ममाशुगो हनिष्यति त्वां तु समित्रबान्धवम् ॥४६

निशम्य रामस्य वचः स लक्ष्मणः प्रगृह्य बाणासनमाहिताशुगम् ।
दिवं च गां च ध्वनयन्धनुर्गुणैर्युगान्तकालप्रतिमो गुहामगात् ॥ ४७

प्रवेशितो वानरराजमन्दिरं प्रबोध्य चापध्वनिना हरीश्वरम् ।
अधृष्यरोषस्फुरदोष्ठनिर्गतं समुज्जगाराग्रजरौद्रशासनम् ॥ ४८

तदुग्रकोपं शमयन्हरीश्वरः प्रसादयन्प्राञ्जलिरीश्वरं नृणाम् ।
क्षणादसंख्येयवलीमुखैर्वृतः सलक्ष्मणो रामसमीपमागतः ॥ ४९

तमेवमूचे वचनं कृताञ्जलिर्मया प्रमादात्प्रणयेन वा कृतम् ।
प्रकोपहेतुं समयव्यतिक्रमं क्षमस्व भो दाशरथे दयानिधे ॥ ५०

प्रदृश्यमानास्त इमे वलीमुखा दिगन्तदन्तावळतुल्यविक्रमाः ।
अहं च ते राम निदेशवर्तिनः प्रशाधि नः किं करवाम किङ्करान् ॥

विनीतवेषं विनतं हरीश्वरं समीक्ष्य संख्यातिगऋक्षसङ्कुलम् ।
विहाय कोपं व्यवसायशालिनं तमाह सन्तुष्टमना जनेश्वरः ॥ ५२

प्रभुर्न चाहं न ममानुजः प्रभुस्त्वमेव हेतुः प्रभुरस्य कर्मणः ।
यतो विजानासि सुहृत्प्रयोजनं त्वमेव शाधि प्रकृतार्थनिश्चयम् ॥ ५३

अयोनिजा मे दयिता सजीविता न वेति रक्षोऽपशदेन संहृता ।
निवासभूमिश्च निशाचरस्य सा विबुध्यतां सम्प्रति वानरेश्वर ॥ ५४

ततः समाहूय स रामसन्निधौ प्लवङ्गवीरं विनताभिधं सुधीः ।
विचीयतां प्राग्दिशि राघवप्रिया त्वदादिवीरैरुदयाचलावधि ॥ ५५

ततो हनूमत्प्रमुखान्वलीमुखान्समादिदेशाप्रतिमानविक्रमान् ।
प्रयात यूयं यमपालितां दिशं परेतराजन्यपुराङ्गणावधि ॥ ५६

ततो विनीतः प्रणतो हरीश्वरः सुषेणमाह श्वशुरं कृताञ्जलिः ।
त्वया प्रतीची दिगियं महीयसा विचेतुमर्हास्ताशिलोच्चयावधि ॥ ५७

समादिशत्तं शतशब्दपूर्वकं ततो वलिं नाम वलीमुखर्षभम् ।
दिशं ह्युदीचीं बहुपुण्यनिम्नगां प्रयाहि माहेश्वरपर्वतावधि ॥ ५८

अनुक्तमुक्तं चतुरन्तविस्तृतं ह्यमुक्तसूच्यग्रमितं महीतलम् ।
विचित्य मासेन रघूद्वहप्रियाप्रवृत्तिमापादयत प्लवङ्गमाः ॥ ५९

महीं परिभ्रम्य समीक्ष्य भूसुतां प्रवृत्तिमादाय यदीह चागताः ।
महत्प्रियं दाशरथेः कृतं भवेन्महत्तरं स्यान्मम च प्लवङ्गमाः ॥ ६०

कृतस्तु मासावधिरागमे पुनर्विलङ्घ्यते यद्यकृतप्रयोजनैः ।
विलङ्घिताज्ञेषु भवत्सु यूथपा वधाद्धि दण्डो न परो विधीयते ॥ ६१

इतीव तांस्तान्प्लवगर्क्षयूथपान्द्रुतं समादिश्य वनालयाधिपः ।
पुनः समाहूय स वायुनन्दनं जगाद भूयः पितृतुल्यविक्रमम् ॥ ६२

धृतौ मतौ शीघ्रगतौ मरुत्सुत त्वया समः कोऽपि न दृश्यते मम ।
अतोऽर्थसिद्धिं त्वयि शंसतीव मे विशुद्धमन्तःकरणं सतामिव ॥

विभाव्य रामोऽपि स कार्यनिर्वहक्षमं हनूमन्तमचिन्त्यविक्रमम् ।
वरं स्वनामाङ्कितमङ्गुळीयकं ददौ प्रियाप्रत्ययहेतवे तदा ॥ ६४

प्रगृह्य रामाङ्गुळिचारुभूषणं प्रणम्य रामं ससखं सलक्ष्मणम् ।
प्रदक्षिणीकृत्य च तं स दक्षिणः कृतक्षणोऽभूत्क्षितिजागवेषणे ॥ ६५

ततो विसृष्टा विनतादियूथपाः क्रमेण पूर्वोत्तरपश्चिमा दिशः ।
विचित्य सीतामनवाप्य दुःखिताः प्रवृत्तिमाहुः स्म नन्वर्थबोधिनीम् ॥

सलक्ष्मणः प्रस्रवणे क्षणे क्षणे प्रतीक्षमाणो यमदिग्गतान्हरीन् ।
सुहृच्चरित्रेण मनो विनोदयन्निनाय रामो दिवसानि कानिचित् ॥ ६७

समन्वितो जाम्बवदङ्गदादिभिर्मरुत्सुतो विन्ध्यगिरेर्मरौ मरौ ।
विचित्य सीतां बहुकन्दरोदरे विवेश चैकं तिमिरावृतं बिलम् ॥ ६८

भृशं पिपासाकुलिता वनौकसः क्षुधातुरास्तत्र विनष्टचेतसः ।
प्रदेशमन्यं बहुपुष्पितद्रुमं प्रविश्य पर्याप्तफलामलोदकम् ॥ ६९

मरिष्यदुज्जीवकरं मनोहरं विलोकनीयं मयनिर्मितं वनम् ।
निवासिनीं तत्र समीक्ष्य तापसीं सुमुच्छ्वसन्ति स्म पुनः सचेतनाः ॥

तयाहृतास्ते मधुमूलकैः फलैर्विशश्रमुस्तत्र वनौकसः क्षणम् ।
तयैव नीतास्तिमिरावृताद्विलाद्भवादिव ब्रह्मगिरा मुमुक्षवः ॥ ७१

विचिन्वतां विन्ध्यगिरावयोनिजामुदग्रदण्डेन कृतोऽवधिर्गतः ।
अतो निराशाः खलु हन्त जीविते विषादमेते हरयः प्रपेदिरे ॥ ७२

पितुः सपत्नान्मरणं पितृव्यतो यतो न मेने वरमन्यथामृतेः ।
जिघांसुरात्मानमतो निवारितोऽप्युपाविशत्प्रायमहो तदाङ्गदः ॥ ७३

अहो जनस्थाननिवासिनां वधस्ततश्च सीताहरणं दुरात्मना ।
जटायुषस्तस्य च वालिनो वधो विनाशमूलं भवति स्म नो विधेः ॥

इतीव तेषां वदतां वनौकसां जटायुषो वृत्तममुष्य पूर्वजः ।
निशम्य संपातिरतीव दुःखितो ह्युपोपविष्टानुपसीदति स्म तान् ॥ ७५

जटायुषो मे हननं यवीयसः कथं कदा केन दुरात्मना कृतम् ।
इतीव पृच्छन्वनगोचरानमूंस्वपूर्ववृत्तं कथयाञ्चकार सः ॥ ७६

कथावशिष्टस्य जटायुषः कथां कथां च रामस्य तथात्मनः कथाम् ।
वनौकसस्तस्य निकृत्तपक्षतेस्तदानुपूर्व्यात्कथयाम्बभूविरे ॥ ७७

दशाननेनापहृता दुरात्मनामुना पथानायि रघूद्वहप्रिया ।
अमुष्य लङ्कानगरी निवासभूः पयोधिमध्ये शतयोजनात्परम् ॥ ७८

विधार्य धैर्यं पुनरर्थसिद्धये विहाय वो दुर्व्यवसायमीदृशम् ।
समुद्रतीरं त्वमुनैव वर्त्मना यथासुखं साधयत प्लवङ्गमाः ॥ ७९

महानुभावेन निशाकरर्षिणा नियन्त्रितो राघवसाह्यमीदृशम् ।
विधातुमस्मिन्निवसामि पर्वते प्रतीक्षमाणो भवदागमं चिरात् ॥ ८०

निपीय संपातिवचोऽमृतं ततः सुधायमानं मनसश्श्रवःसुखम् ।
विरम्य ते प्रायमुपोपवेशनाल्लघूदतिष्ठन्किल दर्भसंस्तरात् ॥ ८१

अयोनिजोदन्तविदं पतत्रिणं वचोभिरापत्समयोपकारिणम् ।
मृदूक्तिभिः स्नेहतरङ्गितेक्षणैर्वनौकसस्तं बहु मेनिरे तदा ॥ ८२

ततः समापृच्छ्य जरत्पतत्रिणं पुनः समुत्साहमुपेत्य वानराः ।
नगात्समुत्प्लुत्य खगा इवोत्तरं प्रतीरमासेदुरवामवारिधेः ॥ ८३

पयोधिमेनं शतयोजनायतं भयानकं नक्रतिमिङ्गिलाकुलम् ।
कथं तरेमेति विदीर्णमानसा विषेदुरेते सुचिरं वनौकसः ॥ ८४

जटायुषो विक्रमणं गतायुषो महामृधे वालिवधस्तथाविधः ।
कपीन्द्रसख्यं पतगेन्द्रदर्शनं मुधा मुधा राघवकार्यसिद्धये ॥ ८५

परीक्ष्यमाणे तु बले वनौकसां समुद्रमुल्लङ्घ्य पुनर्निवर्तने ।
न कस्यचिद्व्यक्तमभूद्बलं ततो वरं पुनः प्रायमुपोपवेशनम् ॥ ८६

वनौकसामात्मगुणावमानिनामितीव तेषां बहुधा विषीदताम् ।
निगूढशक्तिं महतीं हनूमतः प्रकाशयन्नेवमुवाच जाम्बवान् ॥ ८७

अयं महात्मा मरुदौरसः सुधीर्बलेन पित्रा सदृशोऽथ वाधिकः ।
पितामहास्त्रं कुलिशं च वज्रिणो न खल्वमुष्मिन्पतरीव सज्जति ॥

स सागरोऽयं शतयोजनायतो महात्मनस्तस्य तु पल्वलोपमः ।
न केवलं तस्य समुद्रलङ्घने जयत्यनिर्वाच्यगतिर्दिवो भुवः ॥ ८९



पयोधिमेनं शतयोजनायतं भयानकं नक्रतिमिङ्गिलाकुलम् ।
कथं तरेमेति विदीर्णमानसा विषेदुरेते सुचिरं वनौकसः ॥

स. १०, श्लो. ८४, पृ. १०२

अरिष्टशय्यां परितः सरन्नसौ शिशुः समुद्यन्तमुदीक्ष्य भास्करम् ।
फलभ्रमेणास्य जिघृक्षया क्षणात्खमुत्पपात त्रिशतं हि योजनम् ॥

निगूढमग्निं मथितारणिर्यथा तथाविधं दर्शय ते पराक्रमम् ।
विषण्णवर्णां हरिवाहिनीमिमां प्रसादयाह्लाय वनालयोत्तम ॥ ९१

इति स पवनसूनुर्जाम्बवद्बोधितः स-
न्नतुलितमहिमानं बुध्यते स्मात्मसिद्धम् ।
बहुविधबहुजन्मोपार्जिताज्ञानलीनं
द्विज इव निजरूपं देशिकस्योपदेशात् ॥ ९२

सन्तर्तुं सलिलनिधिं सलीलमेनं योगीन्द्रो भवमिव पामरैरलङ्घ्यम् ।
विक्रम्य त्वरितगतिस्तु वानरेन्द्रो माहेन्द्रं सपदि समारुरोह शृङ्गम् ॥

इति श्रीमद्वाधूलकुलजलधिकौस्तुभस्य श्रीमन्मार्गसहायशास्त्रिणस्तनू-
जस्य श्रीमत्सुब्बाम्बागर्भशुक्तिमुक्तामणेः श्रीसुन्दरेश्वरस्य
कृतौ सुन्दररामायणकाव्ये
दशमः सर्गः

## ॥ अथैकादशः सर्गः ॥

मारुतिर्दशमुखेन पापिना मैथिलीमपहृतामयोनिजाम् ।
चारणाचरितसिद्धसेविते तां विचेतुमुपचक्रमे पथि ॥ १

राघवार्थमयमात्तलाघवो लीलयैव जलधिं विलङ्घितुम् ।
सन्निरुध्य हृदये बलादसूनुत्पपात गगने मरुत्सुतः ॥ २

उत्थितेन जलधेर्महीभृता मेनकातनुभवेन मानितः ।
आत्मवीर्यमवगन्तुकामया श्लाघितः सुरसयाभ्रवर्त्मनि ॥ ३

सिंहिकामथ समीक्ष्य राक्षसीमात्मनो गमनविघ्नकारिणीम् ।
लीलयेव कदळीं विलूय तामाससाद पुरमाशरान्विताम् ॥ ४

स त्रिकूटशिखरे समास्थितो राक्षसेन्द्रनगरीं विलोकयन् ।
तां निशीथसमये विलोडितुं काङ्क्षति स्म हनुमान्विधूदयम् ॥ ५

दुर्विलङ्घ्यमितरैर्महोदधिं तां विलोक्य नगरीं च दुर्गमाम् ।
रामकार्यपरिसाधने क्षणं संशयाकुलितमानसोऽभवत् ॥ ६

रामलक्ष्मणपराक्रमं रवेरात्मजस्य च बलं तथात्मनः ।
सोऽवधार्य हृदि कार्यसाधने धैर्यमेव पुनरन्वपद्यत ॥ ७

प्राविशन्सपदि रावणालयं द्वारि मारुतिररोधि लङ्कया ।
तां विजित्य दृढमुष्टिताडनैर्निर्निरोधमवरोधमाविशत् ॥ ८

राघवप्रियतमागवेषणे दीक्षितोऽयमिति मारुतात्मजः ।
तत्सहायमिव कर्तुमुद्यतो दीप्यते स्म पथि तस्य चन्द्रमाः ॥ ९

स्वच्छमौक्तिकसुधाविघट्टितप्रस्फुटस्फटिकभित्तिभासुरा ।
सा पुरी सपदि चन्द्ररोचिषा राजति स्म परभागशोभिता ॥ १०

बन्दितामरवधूविलोचनस्यन्दिबाष्पजलसिक्तकुट्टिमे ।
सा दशास्यभवने विचिन्वता न व्यलोक्यत सती महीसुता ॥ ११

अप्सरस्सु बलवद्धृतासु तामाशरेशयुवतीष्वयोनिजाम् ।
आनिशान्तमपि शान्तकल्मषो न व्यलोकत विचित्य सुव्रताम् ॥१२

अङ्गमङ्गमभिकस्य निर्दयालिङ्गसौख्यविवशीकृताङ्गकाम् ।
अम्बुदोपरि यथाचिरप्रभामाशरेशदयितां ददर्श सः ॥ १३

रूपयौवनविलासमञ्जुळां तां विलोक्य रजनीचराप्रियाम् ।
मारुतिः क्षणविचारभङ्गुरं प्राप्य राघवकुटुम्बिनीभ्रमम् ॥ १४

नन्दति स्म हृदि पुच्छमुच्चकैश्चुम्बति स्म च चकार नर्तनम् ।
स्तम्भमाविशदवातरद्ध्रुवं मार्कटं हि विशिनष्टि चेष्टितम् ॥ १५

या प्रियेण विरहीकृता सती स्वप्तुमर्हति कथं नु भामिनी ।
सा बुभुक्षति कथं पिपासति स्रग्विभूषणपटं दिधीर्षति ॥ १६

या पदा स्पृशति नान्यपूरुषं यातुना सह शयीत सा कथम् ।
एवमात्मनि विमृश्य तत्कुलं शीलमप्यपजहार तद्भ्रमम् ॥ १७

कृत्स्नमेतदपि पत्तनं मयालोळितं जनकजां विचिन्वता ।
किन्तु राघवकुटुम्बिनी न सा हा मदीक्षणपथं समागता ॥ १८

तां सतीमनवलोक्य जानकीं तत्प्रवृत्तिमनवाप्य वा मया ।
गम्यते यदि यथायथं भवेल्लङ्घनं मम वृथा महोदधेः ॥ १९

किं नु मामकृतकृत्यमागतं व्याहरन्ति हरयश्च सङ्गताः ।
तं हरीशमहमुग्रशासनं जीवितेच्छुरुपयामि वा कथम् ॥ २०

मामदृष्टजनकात्मजं प्रियाविप्रयोगविधुरो विलोक्य सः ।
नूनमुत्सृजति तद्गतानसून्राघवो बत विदीर्णमानसः ॥ २१

तस्य जीवितकृते जिजीविषुर्लक्ष्मणोऽपि न हि जीवति ध्रुवम् ।
तन्ममैव हि निवर्तनं महानर्थकारणमितो भविष्यति ॥ २२

सा बलादपहृता पतिव्रता रक्षसा दशमुखेन पापिना ।
ज्ञायते न हि मया सजीविता मारिता परवशाथ वा मृता ॥ २३

उन्नसं तदरविन्दलोचनं मन्दहासमधुराधरद्विजम् ।
हा कदा नु शरदिन्दुसुन्दरं लोकयाम्यहमयोनिजामुखम् ॥ २४

एवमात्मनि विचिन्तयन्नयं धैर्यमापदि निसर्गमावहन् ।
यावदाक्षिपथमेति सा सती तां विचेतुमुपचक्रमे पुनः ॥ २५

यात्वशोकवनिका बहुद्रुमा सा मया न विचिता मनोरमा ।
सा सती वनविहारलालसा रक्षसात्र परिरक्षिता भवेत् ॥ २६

इत्थमात्मनि विचार्य कार्यधीर्मारुतिर्दशमुखावरोधनात् ।
प्रस्थितः सपदि सायकस्यदस्तामशोकवनिकामुपागमत् ॥ २७

फुल्लदुल्लसितमालतीलतालिङ्गिताम्रतरुषण्डमण्डिताम् ।
मत्तकोकिलमयूरनादितां तां निशान्तसमये समाविशत् ॥ २८

स्फाटिकान्तरमनोज्ञकुट्टिमामिन्दुकान्तमणिकॢप्तभित्तिकाम् ।
स्वच्छमौक्तिकसमूहसैकतामिन्द्रनीलमणिजालवेदिकाम् ॥ २९

नूतनामृतसहोदरोदकामीषदुन्मिषितहेमपङ्कजाम् ।
पश्यति स्म तटरोहिभूरुहां कामिनीजनविहारवापिकाम् ॥ ३०

तत्र चैत्ररथनन्दनोपमे मेदिनीवलयमण्डनायिते ।
शिंशपातरुतटे निषेदुषीं रूपिणीमिव वनाधिदेवताम् ॥ ३१

श्वापदैरिव कुरङ्गशावकां राक्षसीभिरभितः समावृताम् ।
लोहितेन परिभूतरोहिणीमादिमामुत कलामिवैन्दवीम् ॥ ३२

धूमजालपिहितां तनीयसीं पावकीमिव शिखामुताध्वरीम् ।
क्लिष्टकश्वरदुकूलवासिनीं तापसीमिव वनान्तवासिनीम् ॥ ३३

कर्कशोपवसनात्कृशीयसीं बिभ्रतीं तनुममुक्तचारुताम् ।
मत्तवारणकरावमर्दितामाकुलामिव सरोजमालिनीम् ॥ ३४

शोकभारविधुरीकृताननामश्रुदूषितकपोलमण्डलाम् ।
त्यक्तकज्जलविलासलोचनामुष्णनिश्वासितशोषिताधराम् ॥ ३५

स्वेददूषितविशेषकालिकां पांसुजालपरिधूसरालकाम् ।
यामिनीपतिवियोगदुर्भगां वासवीमिव दिशं घनावृताम् ॥ ३६

उत्तमैर्गुणगणैर्विभूषितामप्यनर्घमणिमण्डनोचिताम् ।
रूपिणीमिव वियोगवेदनां तां ददर्श पतिशोकपीडिताम् ॥ ३७

रूपयौवनसुशीलसम्पदा तामतर्कयदयोनिजां तदा ।
प्रत्यपद्यत स राघवं मुदा निर्भरेण पवनात्मजो हृदा ॥ ३८

प्रीयमाणहृदयोऽपि जानकीदर्शनेन चिरकाङ्क्षितेन सः ।
क्ष
तौ परस्परवियोगदुःखितौ दम्पती हृदि विचिन्त्य विव्यथे ॥ ३९

तावदत्र रघुनाथभामिनीं तां विलोभयितुमात्तकौतुकः ।
यामिनीचरपतिः समागमद्यामिनीचरमयामसीमनि ॥ ४०

कालपाशवशगः स पापभाक्तामकामयत रामकामिनीम् ।
आमृशन्स परधर्मचारिणीमात्मना सह कुलं जिघांसति ॥ ४१

दुष्टमात्मनि शनैर्विवृण्वताभीष्टमाशरकुलाधमेन सा ।
कष्टमिष्टतमविप्रयोजिता निष्ठुरेण वचसाभिभाषिता ॥ ४२

नाथितापि परिभर्त्सिता मुहुर्नाथसक्तहृदयं सुरद्रुहा ।
मन्त्रराजमिव सद्द्विजस्तदा न प्रदातुमलमद्विजाय सा ॥ ४३

आशरेशितुरवद्यमाशयं नाभिनन्दति यदा पतिव्रता ।
तां तदाशितुमसौ महानसं हन्त दैत्यहतको निनीषते ॥ ४४

सामभेदवचनेन सा पुनर्दानदण्डकरणैः प्रसाद्यताम् ।
आदिशन्निति स राक्षसीगणं राक्षसो निरगमत्स्वपालये ॥ ४५

तन्निदेशकरणोद्यतास्ततो धूमकेतव इवाशरस्त्रियः ।
तां परीत्य परितस्तपस्विनीं तर्जयन्ति रघुनाथभामिनीम् ॥ ४६

काममाशरवधूभिरर्दिता जातवेदसि वपुर्जुहूषति ।
सा मुमूर्षति विषेण वाशिना त्रातुने तु हृदयं न दित्सति ॥ ४७

सा स्वबन्धुजनतावियोजिता राक्षसीभिरभितः समावृता ।
वागुरान्तरकिरातवञ्चिता क्रन्दति स्म हरिणीव भूसुता ॥ ४८

मां वियोजितवता प्रियेण हा नायुषास्मि यदहं वियोजिता ।
अर्धवैशसमहो सुदुःसहं निश्चितं हतविधे त्वया कृतम् ॥ ४९

सत्यमेव खलु सद्भिरीरितं नेति कस्यचिदकालिका मृतिः ।
याहमेवमसुरीभिरर्दिता जीवितं क्षणमपीह धारये ॥ ५०

मामकं नु हृदयं किमायसं कर्कशं किमथ वाजरामरम् ।
दुःखपूर्णमपि यन्न भिद्यते शैलशृङ्गमिव वज्रिणाहतम् ॥ ५१

पापधीरयमतीत्य मांसभुङ्मासयुग्ममवधीकृतं स माम् ।
छेत्स्यति च्छुरिकया निशातया सौनिको भृतशकुन्तिकामिव ॥ ५२

क्वासि हा प्रियतम प्रियंवद क्वासि लक्ष्मण सुमित्रलक्षण ।
रक्षसां कथमिहाततायिनां वध्यतामुपगतां न वेत्सि माम् ॥ ५३

मां व्यलोभयदभाग्यभागिनीं तेन हाटकमृगेण तौ हृतौ ।
नान्यथाप्रतिमवीर्यविक्रमौ मां प्रतीह भवतः पराङ्मुखौ ॥ ५४

मूढया खलु मया दुराशया कूटहाटकमृगाजिघृक्षया ।
प्रेषितस्त्वमसि जीवितेश मे नाशितोऽसि पिशिताशनाशितः ॥ ५५

हा महाशय शशिप्रभानन हा कुशेशयदळायतेक्षण ।
हा जगत्त्रयशरण्य हा ममानाथनाथ रघुनाथ नाथ हा ॥ ५६

हन्त हन्त मम दुश्चरं तपः शीतले च शयनं महीतले ।
निष्फलं मम पतिव्रताव्रतं भस्मनीव विहिता घृताहुतिः ॥ ५७

नाथवत्यपि तपस्विनी तथानाथवत्सकरुणं विलापिनी ।
नाथमेव हृदये विभाविनी नाथति स्म निधनं वियोगिनी ॥ ५८

हालहालमथ वाञ्छमन्तिके सा तदर्थमनवाप्य दुःखिता ।
कर्कशेन कचबन्धनेन वोद्बुध्य सत्वरमसूञ्जिहासति ॥ ५९

प्रेयसा सह समागमे पुनर्जन्मनीह गळिताशया तया ।
अन्यजन्मनि तु संजिगांसया जीवितं प्रसभमुज्जिहास्यते ॥ ६०

एवमात्महतिमातनिष्यतीं सा विभीषणसुता कृपावती ।
तां रुरोध सहसा कुलेन सा राक्षसी न तु सुशीलसम्पदा ॥ ६१

देवि न व्यवसितं तवेदृशं साध्वि राघवपुरन्धि सांप्रतम् ।
दुःखितैवमपि चेत्सजीविता द्रक्ष्यसि त्वमचिराच्छुभायतिम् ॥ ६२

यामिनीचरपतेर्भयावहं रामभामिनि शुभावहं तव ।
दृष्टमद्य समये निशात्यये स्वप्नवृत्तमभिधीयते शृणु ॥ ६३

नागदन्तशिबिकामनन्तगामास्थितः सितगरुद्भिरन्विताम् ।
चन्द्रिकाधवळवस्त्रमाल्यवानागतस्तव पतिः सलक्ष्मणः ॥ ६४

शुक्लमाल्यवसना शुचिस्मिता श्वेतशैलशिखरं समास्थिता ।
भास्करेण भवती यथा प्रभा राघवेण सह देवि सङ्गता ॥ ६५

तत्र तुङ्गतरशृङ्गवर्तिनः स्कन्धदेशमधिरुह्य दन्तिनः ।
सस्मितं प्रियतमेन वीक्षिता पाणिना स्पृशसि चन्द्रतारकाः ॥ ६६

राघवस्तदनु दिव्यमद्भुतं खेचरं तमधिरुह्य पुष्पकम् ।
उत्तराभिमुखमार सत्वरं लक्ष्मणेन गगने त्वया समम् ॥ ६७

रावणस्तु करवीरमाल्यवानुक्षितस्तिलरसेन वीक्षितः ।
पाटलाम्बरधरः पिबन्नसृक्पुष्पकाद्भुवि पतन्नवाक्शिराः ॥ ६८

कास्विदेनमवधूतवाससं काळिका मलमलीमसाङ्गका ।
दर्भरज्जुमवबध्य मध्यमे दक्षिणां दिशमभिप्रकर्षति ॥ ६९

तस्य पुत्रसकळत्रसोदराः शिंशुमारमहिषोष्ट्रवाहनाः ।
रक्तमाल्यवसनाश्च सङ्गतास्तं विभीषणमृतेऽनुयान्ति ते ॥ ७०

तत्पुरी सरथवाजिकुञ्जरा भग्नतोरणवितर्दिगोपुरा ।
सागरे निपतितेव वीक्षिता केनचित्कपिवरेण भस्मिता ॥ ७१

स्वप्नवृत्तमखिलं मयोदितं शीघ्रमेव भविता यथातथम् ।
नैधनाद्विरम ते दुरुद्यमान्मा स्म भामिनि भवात्मघातिनी ॥ ७२

शब्दरन्ध्रमधुरं मनोहरं म्लानजीवसुमनोविकासनम् ।
अर्थवत्त्रिजटया समीरितं जानकीहृदि वचोऽमृतायितम् ॥ ७३

विप्रयोगविधुरं सतीमनोऽवग्रहग्लपितपुष्कराङ्कुरः ।
तद्वचोऽमृतरसैरिवाप्लुतं सञ्जहर्ष नववर्षबिन्दुभिः ॥ ७४

वामबाहुनयनोरु तत्क्षणं स्पन्दितेन युगपन्मृगीदृशः ।
यद्वचस्त्रिजटया समीरितं तत्तथेति पुनरन्वभाषत ॥ ७५

सा निनीषति दिनानि कानिचिन्मानिनी पतिसमागमं प्रति ।
केकिनीव नवनीरदागमं रोहिणीव शशिना समागमम् ॥ ७६

अशोकतरुशाखायामालीनः पवनात्मजः ।
अबुद्ध सीतावृत्तान्तमन्तर्यामीव देहिनाम् ॥ ७७

इति श्रीमद्वाधूलकुलजलधिकौस्तुभस्य श्रीमन्मार्गसहायशास्त्रिणस्तनू-
जस्य श्रीमत्सुब्बाम्बागर्भशुक्तिमुक्ताफलस्य श्रीसुन्दरेश्वरस्य
कृतौ सुन्दररामायणकाव्ये
एकादशः सर्गः

## ॥ अथ द्वादशः सर्गः ॥

वामे पाणौ निहितशिरसं भर्तृचिन्ताधिरूढां
तामासीनामनशनकृशां शिंशपाद्रोरधस्तात् ।
हिंस्रैः सत्त्वैरिव परिवृतां राक्षसीभिः कुरङ्गी-
मक्षिाञ्चक्रे जनकतनयां रामदूतो हनूमान् ॥ १

क्षीणे पुण्ये भुवि निपतितां तारकामन्तरिक्षा-
त्तन्वीमिन्दोरिव नवकलां म्लाननाळीकनाळाम् ।
अल्पाहारामवनिशयनां तां समालोक्य साध्वीं
भूयश्चिन्तां समगत सुधीर्मारुतिर्दूरदृष्टिः ॥ २

सुग्रीवेण प्लवगपतिना प्रेरितास्ते प्लवङ्गा
द्यावाभूम्योरहतगतयो यां विचिन्वन्ति वीराः ।
शिष्टाचारा प्रमदविपिने प्राणमात्रावशिष्टा
दिष्ट्या साध्वी जनकतनया राघवेष्टाद्य दृष्टा ॥ ३

आभाष्या सा किमु परिवृता राक्षसीभिर्ममैषा
नाहं मन्ये समुचितमिहाभाषणं तत्समक्षम् ।
दृष्ट्वापीमां यदि पुनरनाश्वास्य गच्छामि ताव-
त्प्राणानेव प्रसभमचिरात्सा जहातीति सिद्धम् ॥ ४

दृष्टा सीता यदि वद सखे सा किमाहेति पृष्टो
रामेणाहं विरहविधुरं किं नु वा तं ब्रवीमि ।
सोऽभिज्ञानं किमपि च विनाश्वासनीयः कथं वा
विश्वस्तः स्यात्कथमवितथे भाषणे निष्प्रमाणे ॥ ५

सीतावाक्यश्रवणकुतुको भग्नकौतूहलश्चे-
त्काकुत्स्थो वा तदवरजनिर्वा विवस्वत्तनूजः ।
कोपावेशप्रसरदसृगाक्रान्तनेत्रद्वयान्तः
प्रान्तोद्वान्तज्वलनजटिलैर्निर्दहेन्मामदान्तः ॥ ६

आस्थायाहं सपदि रुचिरं मानुषं रूपधेयं
गुर्वीमुर्वीसुर इव गृणन्व्यक्तगीर्वाणवाणीम् ।
यद्यात्मानं जनकदुहितुर्दर्शयिष्यामि देव्याः
सा मां भीता भवति नियतं रावणं मन्यमाना ॥ ७

कापेयं वा मम सुवदना रूपमालोक्य सीता
भूयस्त्रासं व्रजति बहुशो यातुभिस्त्रासिता सा ।
त्रासादुच्चैर्व्यसनगुरुकं सा विलापं करिष्य-
त्यस्माद्रक्षोजनकलकलस्तद्रहोभेदनं स्यात् ॥ ८

दण्डादण्डिप्रबलकलहे रक्षसां सायुधानां
सन्नद्धे मे सति च बहुशो मां विजेतु ह्यनीशाः ।
हिंसाकर्मप्रसृतरुचयो मां विनिर्यातयेयुः
सीतामेतां रघुवरहितां मारयित्वातिभीताम् ॥ ९

दोषोऽयं स्यादवनिसुतया भाषणे मे महीया-
न्प्राणत्यागः खलु पुनरनाभाषणे स्याच्च देव्याः ।
डोलाकल्पं हृदयमधुना मेऽपरिच्छेदलोलं
यातायातं भवति समये निश्चयज्ञानमूढम् ॥ १०

नान्यालङ्घ्यप्रथितजलधेर्लङ्घनं मे वृथा स्या-
त्कल्याणीयं कथमिव मया सा समाश्वासिता स्यात् ।

कार्यं त्वेतत्कथमवसितं रामसुग्रीवयोः स्या-
च्छ्रेयो भूयो मम कथमिहामुत्र संवर्धितं स्यात् ॥ ११

एवं चिन्ताकुलितहृदयो बुद्धिमानाञ्जनेयः
प्रत्येति स्वे वचसि च यथा राघवप्रेयसी सा ।
शाखालीनो हृदयसुखदं श्रोतुरिक्ष्वाकुनाथ-
श्रीरामस्य श्रवणमधुरं श्रावयामास वृत्तम् ॥ १२

सद्यो दुग्धं पय इव सितामिश्रितं माक्षिकेक्षु-
द्राक्षासारं नवमिव सुधासिन्धुहय्यङ्गवीनम् ।
वर्णे वर्णे विगळदमृतं व्यक्तवाणीसनाथं
भर्तुर्देवी चरितमशृणोदाञ्जनेयेन गीतम् ॥ १३

सन्तापघ्नं रमणचरितं सामृतासारशीतं
श्रुत्वा शाखामृगनिगदितं मैथिली श्रोत्रपेयम् ।
प्रीतिस्फीता विकचवदना हर्षसंवृद्धसत्त्वा
घर्मक्लिष्टा जलदनिनदं बर्हिणी प्रावृषीव ॥ १४

साध्वी हर्षस्तिमितहृदया विस्मयस्फीतनेत्रा
पत्युत्कण्ठोन्नमितवदना प्राप्तशाखावलम्बा ।
विद्युत्पिङ्गं कपिशनयनं वेष्टितक्षौमवस्त्रं
सीता शाखामृगवरमुदैक्षिष्ट शाखोपविष्टम् ॥ १५

स्मृत्वा तावत्कनकहरिणच्छद्म रक्षोऽधमेन
प्राप्तानर्थं पुनरपि तथाभूतमेनं विभाव्य ।
भग्नोत्साहा दळितहृदया साध्वसास्विन्नदेहा
क्रोशन्ती सा भुवि निपतिता राम रामेति सीता ॥ १६

आत्मानं तामवनितनयामन्यथा भावयन्ती-
मालोच्यायं पवनतनयः शिंशपातोऽवतीर्य ।
भूयो भूयो रघुवरकथामुच्चरन्नुच्चकैस्तां
मूर्छापन्नामिव हि महितो मान्त्रिकोऽजीवयत्ताम् ॥ १७

साध्वीमेनां दयितचरिताकर्णनालब्धसंज्ञां
प्रातः प्राचीं दिशमिव शनैर्मुच्यमानां तमोभिः ।
सान्त्वैरुक्तैर्वचननिकरैः किंचिदाश्वासितां तां
मूर्ध्न्यादायाञ्जलिपुटमिति व्याजहाराञ्जनेयः ॥ १८

भर्तुर्दूतं सुदति सुभगे विद्धि मामाञ्जनेयं
सुग्रीवस्य प्रियरघुपतेः सूरसूनोः सखायम् ।
तेषामेकं दिवि भुवि तवान्वेषणे प्रेषितानां
मा त्वं मातर्यजनजनने स्मान्यथा मन्यथा माम् ॥ १९

वार्तं ते त्वं जननि जगतीपुत्रि जानीहि भर्तु-
श्चापन्मित्रं तदवरजनिर्लक्ष्मणस्त्वामनंसीत् ।
सुग्रीवस्ते कुशलमवदत्प्रेयसस्ते सुहृत्ते
त्वद्वृत्तान्तश्रवणकुतुका द्रष्टुमुत्कण्ठितास्त्वाम् ॥ २०

पम्पारोधोवनभुवमटन्सानुजो जीवितेश-
स्त्वामन्विष्यन्कपटयतिना वञ्चितां पञ्चवट्याम् ।
राज्यभ्रष्टं सहजनिकृतं जायया विप्रयुक्तं
सुग्रीवं तं सुहृदमवृणोदृश्यमूकाद्रिसंस्थम् ॥ २१

तावन्योन्यं हरिनरवरौ व्यञ्जितान्योन्यभावौ
सानुक्रोशौ प्रथितयशसौ सख्यमापाद्यमानौ ।

त्वामन्वेष्टुं तपनतनयो वालिनं देवि हन्तुं
रामश्चैवं स्वयमकुरुतामग्निसाक्ष्यं प्रतिज्ञाम् ॥ २२

रामेणासाववितथगिरा स्थापितो वालिराज्येऽ-
मोघीकुर्वन्द्युमणितनयः स्वां कृतज्ञः प्रतिज्ञाम् ।
त्वामन्वेष्टुं दिशि दिशि समादिष्टवान्यान्वरिष्ठां-
स्तेषामेकं जनकतनये विद्धि मामाञ्जनेयम् ॥ २३

शान्तोत्साहो मुहुरपि मुहुः सान्त्वितो लक्ष्मणेन
भ्रान्तस्वान्तो विरहदहनक्लान्तवक्त्रो नितान्तम् ।
हन्तेदानीमधिगिरितटं त्वय्यविश्रान्तचिन्तः
कान्तोदन्तश्रवणकुतुकस्तावको देवि कान्तः ॥ २४

श्रावं श्रावं श्रवणमधुरं कूजितं कोकिलानां
स्मारं स्मारं भवति भवतीमेकतानो भवत्याम् ।
दर्शं दर्शं दिशि दिशि महीमश्रुपूरेण सिञ्च-
ञ्जल्पं जल्पं जनकतनये क्वासि हा प्रेयसीति ॥ २५

दृष्ट्वा पुष्पं रुचिरमपि वा स्वादु मूलं फलं वा
द्यावाभूमी स हि मुखरयन्रोदयन्नृश्यमूकम् ।
ग्रावाणं वावरजहृदयं द्रावयन्वज्रकल्पं
मुक्तग्रीवं विलपति सखि क्वासि हा प्रेयसीति ॥ २६

चिन्ता शोको मनसिजरुजा त्वत्कृते ते निकामं
त्रेता वह्निर्दहनशरणं तापयन्तीव रामम् ।
भ्रामं भ्रामं गिरिनदनदीः प्रेयसीं त्वामपश्य-
न्रोदं रोदं स हि न लभते देवि तापोपशान्तिम् ॥ २७



स्रस्तं हस्तादपि वलयितं स्वाभिधानाङ्कितं त्व-

द्विश्वासार्थं प्रहितमनघे प्रेयसा तेऽङ्गुलीयम् ।

कान्तालोकोत्कलिकहृदये कान्तभूषाविशेषं

दृष्ट्वा कान्तप्रतिनिधिं समाधेहि भद्रालकान्ते ॥

स. १२, श्लो. ३१, पृ. ११७

देव्या सार्धं सरसमधुरालापशून्ये निशीथे
निद्रामुद्रां क्षणमभिनयन्नश्मपृष्ठे शयानः ।
उत्स्वप्नन्हा जनकतनये क्वासि हा प्रेयसीति
स्वापादर्धक्षणपरिमितादेवि जागर्ति भूयः ॥ २८

इत्येवं सा हृदयभिदुरं रामदूतेन गीतं
श्रुत्वा सीता सकरुणरवं प्राणनाथस्य वृत्तम् ।
प्रातः प्राचीदिगिव तमसा मुच्यमानापि भूयो
मेघच्छन्ना विकृतवदना रामशोकेन जाता ॥ २९

भ्रात्रानीतं मधुरमधु न स्वादु मूलं फलं वा
भुङ्क्ते मेध्यं पललमथ वा विप्रयुक्तः स रामः ।
हन्त प्राणप्रियसहचरीं त्वां पुनर्द्रष्टुकामः
प्राणाधारं विघसमनुजेनानुनीतो भुनक्ति ॥ ३०

स्रस्तं हस्तादपि वलयितं स्वाभिधानाङ्कितं त्व-
द्विश्वासार्थं प्रहितमनघे प्रेयसा तेऽङ्गुलीयम् ।
कान्तालोकोत्कलिकहृदये कान्तभूषाविशेषं
दृष्ट्वा कान्तप्रतिनिधि समाधेहि भद्रालकान्ते ॥ ३१

हस्ते कृत्वा जनकतनया सा प्रियस्याङ्गुळीयं
सिक्त्वापाङ्गक्षरितपयसा शोकमोदोद्गतेन ।
निश्चिन्वन्ती पवनतनयं प्रेयसा प्रेषितं तं
विस्रब्धा सा निभृतहृदया दूतमेवं जगाद ॥ ३२

रामो नित्यं व्यथितहृदयो मत्कृतेऽनन्यचेताः
काकोलात्कं तदमृतमिव व्याहृतं वायुसूनो ।

मग्नानस्मान्व्यसनजलधौ पश्य दुर्दैवयोगा-
त्तस्यापि स्यान्न खलु बलवाँल्लङ्घनीयः कृतान्तः ॥ ३३

शोकाम्बोधेः कथमिव परं पारमस्याधिगच्छे-
त्पापीयांसं निशिचरपतिं सानुबन्धं निहत्य ।
यावद्रक्षोहतकविहितो मद्वधायावधिर्यः
सोऽयं मासद्वयपरिमितो नातिवर्तेत रामः ॥ ३४

अद्यैव त्वां दयितवसतिं देवि शक्नोमि नेतुं
निश्शङ्कांसं यदि मम समारोढुमङ्गीकरोषि ।
शक्नोषि त्वं कथमिव कपे सोढुमल्पप्रतीकः
कापेयं ते विशदयसि मे भावमेव स्वकीयम् ॥ ३५

अज्ञात्वा मे निजमपि बलं विक्रमं रूपधेयं
नार्हस्येवं पृथगिव जनो मामवज्ञातुमम्ब ।
कीदृग्रूपं कियदिव बलं कीदृशो विक्रमस्ते
ह्यज्ञायास्त्वं कपिवर यथार्थेन मे दर्शयेथाः ॥ ३६

सीतादेव्यास्तदनु ववृधे प्रत्ययार्थं हनूमा-
नभ्रोल्लेखं झटिति कलयन्पर्वताकारमङ्गम् ।
ईदृग्रूपं प्रतिभयमुपादाय देव्याः पुरस्ता-
दस्ताशङ्कां विनयविनतः प्राञ्जलिस्तामुवाच ॥ ३७

सीते मातस्तव मनसि या सा निवृत्ता विशङ्का
दृष्ट्वेदानीं किमु निरुपमं रूपमप्राकृतं मे ।
लङ्कामेतां सनगवनिकां साट्टवप्रां सनाथां
नेतुं शक्तिर्भुवनविदिता मे वरीवर्ति देवि ॥ ३८

सत्यं सत्यं त्वमसि हनुमन्विक्रमश्लाघनीयः
कल्पेताल्पो जलधिमथ वा हेलया कस्तरीतुम् ।
नावज्ञातुं खलु लघुतया व्याहृतस्त्वं मया य-
त्तद्विज्ञातुं तव तु महिमप्रौढिमानं निगूढम् ॥ ३९

आरुह्यांसं मरुदिव नभोवर्त्मना गच्छतस्ते
शङ्के भीरुर्मदनुगमने सौम्य दोषाननेकान् ।
श्रेयस्तस्य प्रथितयशसः प्रेयसो मे यशस्यं
हत्वा युद्धे दशमुखमितो मां नयेत्स स्वयं चेत् ॥ ४०

रामादन्यं न खलु हनुमन्नङ्घ्रिणापि स्पृशेयं
गात्रस्पर्शात्तव भवतु मे मा व्रतस्यास्य भङ्गः ।
गात्रस्पर्शं यदुपगमिता रावणस्यावशाहं
किं वा कुर्वे विजनविपिने हा हठात्तद्गृहीता ॥ ४१

एतैरन्यैः सपदि हनुमन्कारणैस्त्वानुयातुं
शङ्के रक्षोयुवतिजनसंभर्त्सितेहार्दितापि ।
राजीवाक्षं रमणमिह मे क्षिप्रमेवोपनेतुं
रामं रक्षोविदळनपटुं सानुजं साम्प्रतं ते ॥ ४२

पायं पायं जनकतनयावाक्सुधां वायुसूनु-
र्वारं वारं निरवधिमुदम्भोनिधावेष मग्नः ।
श्लाघं श्लाघं हृदि पुनरिमामेकपत्नीपुरोगां
नामं नामं विनमितशिराः प्राञ्जलिस्तामवादीत् ॥ ४३

सीते नैतन्न खलु सदृशं कारणं यत्त्वयोक्तं
साध्वीनां तत्प्रथयति गुणोत्कर्षमाजन्मसिद्धम् ।

फुल्लन्मल्ली न खलु विजहात्यात्मनो दिव्यगन्धं
शुष्का वार्द्रा तदपि लुलिता यत्र कुत्रोज्झिता वा ॥ ४४

रामादन्यं कमपि न पदापि स्पृशामीति वाक्यं
व्याचक्षीथाः सुतनु सदृशं रामपत्न्यास्तवेदम् ।
ईदृग्ब्रूयाद्वचनमितरा का नु सीमन्तिनी त्व-
त्प्रायः प्रेयोविरहविधुराः शीलसंपत्त्यपेताः ॥ ४५

रक्षोमध्ये भवति भवतीं भूयशो भर्त्स्यमानां
भद्रे भर्तुर्विरहविधुरां भर्तृसन्दर्शनोत्काम् ।
भर्त्रा सार्धं द्रुततरमहं त्वां पुनर्योजयिष्य-
न्दुर्लङ्घ्यत्वात्प्रबलजलधेर्व्याहरामि स्म नान्यत् ॥ ४६

आयातुं ते यदि सह मया विद्यते नाभिलाषो
विश्वासार्थं किमपि वितर प्रत्यभिज्ञानमम्ब ।
कं वोदन्तं कथयसि तव प्रेयसे किं नु वाच्यं
येनाहं त्वद्विरहविधुरं तं समाश्वासयामि ॥ ४७

सीता साध्वी मृदुमधुरया तेन वाचैवमुक्ता
प्रीत्याचख्यौ सदयहृदयं मारुतिं तं महेच्छम् ।
चूडारत्नं नयनसुखदं राघवाय प्रदेयं
जानीयान्मां स हि रघुपतिर्यस्य सन्दर्शनेन ॥ ४८

मन्दाकिन्यास्तटभुवि पुरा चित्रकूटप्रदेशे
सुप्तः स्वाङ्के स खलु मृगयाश्रान्त आर्द्रान्तरात्मा ।
तस्मिन्काले कृतमविनयं सागसा वायसेन
प्रेयांसं मे सदयहृदय स्मारयेस्त्वं हनूमन् ॥ ४९

किं चायं ते पवनतनय प्राणनाथः स वाच्यो
वाचा मेऽल्पागसि मम कृते वायसे ब्राह्ममस्त्रम् ।
प्रायुङ्क्थास्त्वं कथमिव पुनर्मां बलाद्योऽहरत्तं
पापात्मानं दयित दयसे निर्दयो मय्युदास्से ॥ ५०

द्वौ मासौ हा प्रियतम कृतो जीवितस्यावधिर्मे
ताभ्यामूर्ध्वं न खलु निभृतं जीविताशावकाशः ।
जीवन्तीं मां व्यसनजलधेस्त्वं हि चेदुद्दिधीर्षु-
स्तावत्पूर्वं जहि निशिचरं नाथ मां मा जहीहि ॥ ५१

साक्षाद्द्रष्टुस्तव सुविदिता सौम्य कष्टा दशा मे
सर्वं तावत्सदयहृदय प्रेयसः श्रावयेथाः ।
दुःखाम्भोधेरतुलितबलस्तारयेन्मां यथास्मा-
त्प्राणेशं मे विरहविधुरं त्वं समाधेहि रामम् ॥ ५२

तस्यामेवं हृदयभिदुरैरुक्तवत्यां वचोभि-
र्भूयो भूयो मधुरवचनैः सान्त्वयन्नाञ्जनेयः ।
चूडारत्नं जनकतनयादत्तमादाय देवीं
तामापृच्छय प्रणतिविनतः कार्यशेषं निदध्यौ ॥ ५३

दृष्टा देवी जनकतनया दण्डकायां विनष्टा
शिष्टाचारप्रवणहृदया राघवेष्टात्र दिष्ट्या ।
दृष्टो नासीदियमपहृता येन रक्षोनिकृष्टो
दृष्टा लोकात्रितयविदिता नास्य सप्ताङ्गपुष्टिः ॥ ५४

क्रव्यादेषु प्रभवितुमलं सामदाने न भेदो
यस्मादेते भुवि धनमदेनावलिप्ता बलाढ्याः ।

कार्यञ्चैतद्वितयमधुना दृश्यतेऽल्पावशिष्टं
युक्तायुक्ते मम विमृशतस्त्वन्तिमोपायसाध्यम् ॥ ५५

आलोच्यैवं मनसि सुचिरं दूरधीराञ्जनेयो
निश्चिन्वानो दशमुखसमालोकनं दण्डसाध्यम् ।
तस्य प्रेमास्पदमुपवनं हृद्यमालोकनीयं
सीतादेव्याश्रयतरुमृते ध्वंसयामास सर्वम् ॥ ५६

भग्नैर्वृक्षैः कुसुमकलितैश्चूर्णितैरद्रिशृङ्गै-
रामृष्टैस्तैः प्रहिभिरचिरोन्मूलिताभिर्लताभिः ।
आक्रोशद्भिर्विहगनिवहैस्त्रासिताभिर्मृगीभिः
सर्वं रक्षःप्रमदवनमुल्लोलकल्लोलमासीत् ॥ ५७

रक्षःस्त्रीभिर्जनकतनयारक्षणीभिर्द्रुताभि-
र्भग्नं राजंस्तव वनमभूत्केनचिद्वानरेण ।
इत्युक्तः सन्निशिचरपतिः क्रोधसंरम्भदम्भा-
दुच्छूनाभ्यामुदवमदसृक्नेत्रमालाञ्चलाभ्याम् ॥ ५८

कोऽयं कीशापशद इति वा कस्य वायं कुतोऽयं
दुर्लङ्घ्यं वोदधिमिह कथं लङ्घयित्वा स आगात् ।
इत्थं भूयो मनसि विमृशन्कीशमानेतुमेनं
लङ्काधीशो निशिचरवरान्किङ्करानादिदेश ॥ ५९

युद्धाकाङ्क्षी पवनतनयः कालपाशावबद्धा-
न्बद्धश्रद्धो निशिचरवधे सायुधान्युद्धसिद्धान् ।
क्रोधामीद्धानतिलघुतया सोऽवधीद्यातुधाना-
न्पादाघातैः पृथुतरशिलाशैलसङ्घप्रहारैः ॥ ६०

लङ्काधीशस्तदनु निहतान्किङ्करांस्तान्निशम्य
प्रोद्यत्क्रोधज्वलनजटिलज्वालदन्दह्यमानः ।
जीवग्राहं स कपिहतको गृह्यतां वा प्रयत्ना-
द्धोमारं वा निशिचरवरा मार्यतामित्यशात्सः ॥ ६१

जेगीयन्ते रघुकुलपतिर्लक्ष्मणो भानुसूनु-
र्दासश्चाहं रघुकुलपतेर्दानवानां निहन्ता ।
उच्चैरेवं गिरमनुपदं तूच्चरन्वायुसूनु-
र्लङ्काद्वारोपरि पुनरसौ योद्धुकामोऽवतस्थे ॥ ६२

सन्दिष्टांस्तान्निशिचरवरान्जम्बुमालिप्रधाना-
न्सप्तामात्यप्रवरतनयान्पञ्चसेनाग्रनेतॄन् ।
युद्धोन्मत्तानलघुबलिनः सायुधान्सानुबन्धा-
ञ्शैलाघातैः पवनतनयः पिष्टपेषं पिपेष ॥ ६३

भग्ने रम्यप्रमदविपिने नाशिते चैत्यहर्म्ये
रक्षोवीरेष्वतुलितबलेष्वेषु निर्वापितेषु ।
दुर्वारौर्वानल इव लये दीर्घनिश्वासवात-
प्रध्मातेद्धो निशिचरपतेः क्रोधवह्निर्जजृम्भे ॥ ६४

आदायाथो निशिचरपतेर्नेत्रसन्दर्शिताज्ञा-
मक्षो वैरिक्षपणकरणे शिक्षितो यश्च दक्षः ।
आजानेयैः पवनजवनैर्वाजिभिर्योजितं स
प्रायाद्योद्धुं रथमधिवसन्नाञ्जनेयेन सार्धम् ॥ ६५

अत्याश्चर्यं हृदयभिदुरं गर्भनिर्भेदकं त-
द्युद्धं रक्षःप्लवगवरयोरप्रतिद्वन्द्वमासीत् ।

तस्मिन्काले न तपति रविर्नैव वाति स्म वायु-
र्द्यावाभूमी प्रतिनिनदतः क्षुभ्यति स्माम्बुराशिः ॥ ६६

द्वावन्योन्यं निजभुजबलं दर्शयन्तावदान्तौ
भ्रान्तौ चक्रभ्रम इव नभस्यभ्रनादं नदन्तौ ।
नेत्रोपान्तादनलशकलानुद्वमन्तौ नितान्तं
नाभूतां तौ करिकलभवद्युध्यमानौ प्रशान्तौ ॥ ६७

अग्निर्वारिर्लघुरपि तथा वामयोऽनादृतो य-
द्यः स्वन्तः स्यादनुपशमतः प्राप्तकाले न कस्य ।
निश्चित्यैवं पवनतनयः पादयोस्तं गृहीत्वा
चिक्षेपाक्षं भुवि गगनतो भ्रामयित्वासकृत्सः ॥ ६८

रक्षोवीरः क्षितिनिपतितो भग्नबाहूरुवक्षा-
स्तत्याजासून्सपदि शकलीभूतसर्वाङ्गपक्षः ।
संपश्यद्भिः सुरमुनिगणैश्श्लाघितो रामदूतो
युद्धाकाङ्क्षी पुनरपि बहिर्द्वारमास्थाय तस्थौ ॥ ६९

शस्त्रैरस्त्रैरनिलतनयो बाणपातैरवध्यो
जीवग्राहं स कपिहतको वैधसास्त्रेण ग्राह्यः ।
आलोच्यैवं दशमुखसुतो मेघनादो यवीया-
न्प्रायुङ्क्तास्त्रं पवनतनये ब्राह्ममस्त्रेष्वभिज्ञः ॥ ७०

तेनास्त्रेण क्षणमिव यथा यत्प्रशापेन बद्धो
बन्धादस्मात्पुनरपि तथा तत्प्रसादेन मुक्तः ।
बन्धादस्मात्पवनतनयो मोक्षणाद्वा न तस्मा-
त्तत्त्वार्थज्ञो भयविरहितः खेदमोदौ प्रपेदे ॥ ७१

आक्रुष्टोऽसौ निशिचरपतेरन्तिकं तेन दृष्टो
दुष्टः कस्त्वं कुत इह कथं त्वागतोऽसीति पृष्टः ।
हृष्टः सीतापहरणपटोर्दर्शनात्सूपविष्टो
दुष्टात्मानं दशमुखमिति स्पष्टमाचष्ट धृष्टः ॥ ७२

रे रे रक्षोऽधम परवधूस्पर्शपातित्यराशे
कीशेशो याञ्जनकतनयान्वेषणायादिदेश ।
द्यावाभूम्योरहरहगमनान्मत्समान्मद्विशिष्टां-
स्तेषामेकं कलुषहृदयावेहि मामाञ्जनेयम् ॥ ७३

दृष्टा देवी खलु तव गृहे या त्वया पापबुद्ध्या
भर्त्रा देव्रा क्षणविरहिता निर्दयेनाहृता सा ।
जानीष्वैनां रघुवरवधूं त्वद्गृहे सन्निरुद्धां
तृण्यागारच्छादावनिहितां विस्फुलिङ्गमिवाग्नेः ॥ ७४

विज्ञातोऽभूद्भुवनविदितो विक्रमो वालिनस्ते
रामेणासौ न खलु निहतश्चैकबाणेन विद्धः ।
रे रे रक्षोऽधम बलवता तेन रामेण सार्धं
हर्यक्षेण क्षणमिव शुनो विग्रहस्ते न युक्तः ॥ ७५

रामे तस्मिन्नतुलितबले रे यथाजात वीरे
सीतामेतामपहृतवता पापबुद्ध्यापराद्धम् ।
मन्तोरस्मात्कथमिव पुनर्मोक्ष्यसे राघवाद्वा
तस्याः प्रत्यर्पणकरणतस्त्वन्यथा सप्रणामम् ॥ ७६

राज्ये प्राज्ये परिजनधनापत्यवर्गेऽपवर्गे
प्राणेष्वास्था यदि जनकजां राघवाय प्रदेहि ।

भूतग्रामग्रसनसमयाविर्भवद्रुद्रकल्प-
श्रीरामेषुज्वलनजटिले मा स्म भस्मीभवस्त्वम् ॥ ७७

पथ्ये तथ्ये हितमभिहिते रामदूतस्य वाक्ये
प्रक्षीणायुर्गुणमगणयन्रावणः क्रोधनोऽसौ ।
कार्याकार्ये पुनरविमृशन्नार्यपादैर्निषिद्धं
दुर्मेधास्तद्वधमपथगो व्यादिशद्दुर्विदग्धः ॥ ७८

रक्षोमध्ये विदुरमविदुर्भीषणं यं विपूर्वं
स ज्यायांसं सुविहितवचोगुम्भनैः सान्त्वयमानम् ।
भ्रातर्दूतस्तव सुविदितो जातुचिन्नैव वध्य-
स्तस्मादस्माद्विरम विरमेत्युद्यमात्तं न्यरौत्सीत् ॥ ७९

श्रुत्वा नक्तञ्चरपतिरसौ दण्डनीत्यां यथोक्तं
दुर्दूतानामविनयवतामङ्गवैरूप्यदण्डम् ।
लाङ्गूलं तु प्रियमतितरां भूषणं वानराणां
दूतस्यास्य प्रियकरमदो दह्यतामित्यशात्सः ॥ ८०

मन्दात्मानस्तदनु सहसा राक्षसा वायुसूनो-
र्द्राघीयांसं परिघसदृशं पुच्छमावेष्ट्य तस्य ।
तैलोत्सिक्तैः पृथुतरपटैः क्लिष्टकार्पासकैस्तैः
प्रध्मातामिं कलकलरवाः पातयन्ति स्म तस्मिन् ॥ ८१

चित्रं चित्रं सपदि हनुमत्पुच्छसन्दीपितोऽग्निः
सर्वेष्वङ्गेष्वजनि सुमहच्चन्दनक्षोदशीतः ।
सख्युः सूनुः स इति दयया रामपत्नीप्रभावा-
द्दाहोस्विद्वा रघुपतिभयाद्रावणेऽसूयया वा ॥ ८२



प्रह्वीभूयाद्दृतपृथुवपुर्मारुतिर्वालबद्धं

सम्यग्दीप्तं तदनु शिथिलीकृत्य कार्पासबन्धम् ।

धावं धावं प्रतिगृहमनेनैव लङ्कामशेषां

सन्दीप्याग्निं जनकसुहृदं स्वानुकूलं व्यताप्सीत् ॥

स. १२, श्लो. ८४, पृ. १२७

पर्यायेण प्लवगसचिवस्तं समाराद्धुकामः
स्वस्मिन्सौम्यः समजनि यतो यः प्रकृत्याश्रयाशः ।
स्निग्धे या प्रत्युपकृतिरियं या कृता वा विरुद्धे
नैतच्चित्रं तदिह महतां शीलमाजन्मसिद्धम् ॥ ८३

प्रह्वीभूयाद्दृतपृथुवपुर्मारुतिर्वालबद्धं
सम्यग्दीप्तं तदनु शिथिलीकृत्य कार्पासबन्धम् ।
धावं धावं प्रतिगृहमनेनैव लङ्कामशेषां
सन्दीप्याग्निं जनकसुहृदं स्वानुकूलं ह्यतार्प्सीत् ॥ ८४

कामं लङ्कादहनसमये त्वाश्रयाशे दिविस्पृ-
श्याक्रोशन्तीमसुरविततिं मा स्म कीशः शृणोत्सः ।
का वा जाता जनकदुहिता हन्त शोकाभिभूता
नैवं किंचिन्मनसि कलयामास कोपाभिभूतः ॥ ८५

दग्धायामप्यवनितनया रक्षसां राजधान्यां
नास्पृष्टा सा बत हुतभुजा ब्राह्मणीवाद्विजेन ।
एवम्भूतां गिरमुदयिनीमाकलय्यान्तरिक्षा-
त्सन्तुष्टात्मा स्तिमितहृदयो वायुसूनुर्बभूव ॥ ८६

निर्वर्त्यैवं हृदयनिचितं कार्यमल्पावशिष्टं
सिक्त्वाम्भोधौ तदनु हनुमानग्निसन्दीप्तपुच्छम् ।
मन्दं मन्दं किल परिसरन्व्रीडया वा भयाद्वा
सीतादेवीं पुनरपि समाप्रष्टुमासेदिवान्सः ॥ ८७

आपृच्छ्यैनामवनितनयां सप्रणामं हनूमा-
नादायाथो पुनरभिहितं वाचिकं बाष्पकण्ठ्या ।

निष्प्रत्यूहं गगनजलधिं लङ्घयित्वा सलीलं
तीरे तस्मिन्हरिभिरुदधेरुत्तरे सङ्गतोऽभूत् ॥ ८८

दृष्टा साध्वी दशमुखवने रामपत्नी विषण्णा
दिष्ट्याधस्तात्पतिमनुरता शिंशपाद्रोर्निषण्णा ।
भारत्यैवं मधुमधुरया नन्दयन्नङ्गदादी-
न्मन्दस्मेरस्फुरितनयनो जाम्बवन्तं ववन्दे ॥ ८९

प्रीतिस्फीतैस्तदनु हरिभिर्जाम्बवद्वालिजाद्यैः
प्रत्यग्राग्र्यैरमृतमधुरैरर्चितो मूलकन्दैः ।
आप्रस्थानं स्वकृतमखिलं वीक्षितं वा श्रुतं वा
सर्वं तावत्कपिरकथयन्नातिरिक्तं न चोनम् ॥ ९०

सीतोदन्तं पवनतनयेनेरितं श्रोत्रपेयं
श्रुत्वैकाग्र्यान्मुदितमनसः संस्तुवन्तोऽङ्गदाद्याः ।
कल्यामेतां कथयितुमरं राघवाय प्रवृत्तिं
निर्जग्मुस्ते पवनजवनाः प्रांशुमाहेन्द्रशृङ्गात् ॥ ९१

मध्येमार्गं दधिमुखसमारक्षितं यत्प्रयत्ना-
द्देवानामप्यनतिसुगमं दुर्गमं चेतरेषाम् ।
सुग्रीवाज्ञामवितथगतिं लङ्घयन्तः प्लवङ्गाः
सिद्धार्थास्तन्मधुवनमिदं प्राविशन्निर्विशङ्काः ॥ ९२

सीतोदन्तश्रवणजनितानन्दनिष्यन्दमक्ष्ण-
स्सुग्रीवानुग्रहमधुमहाभाजनं मन्यमानाः ।
दृप्ता मत्ता अपि दधिमुखेनातिवेलं निषिद्धा
माध्वीमद्धा मधुवनभवां ते धयन्ति स्म धीराः ॥ ९३

दृष्ट्वा तावत्कृतमविनयं वानरैरङ्गदाद्यै-
रावेद्यासौ प्लवगविभवे सर्वमुद्यानपालः ।
तेनाज्ञप्तो मुदितहृदयेनाश्रुता कार्यसिद्धिं
सिद्धार्थांस्तान्प्रहिणु वनप क्षिप्रमित्याजगाम ॥ ९४

विज्ञायाज्ञां दधिमुखमुखाद्वानराणां तु राज्ञो
माध्वीपानादलसगतयस्ते मरुन्नन्दनाद्याः ।
प्रस्थायास्मात्पवनजवना वात्ययेवेरिताब्दाः
सीतोदन्तस्तनितमुखरा राममासेदिवांसः ॥ ९५

सीतोदन्तश्रवणकुतुकं राममन्वास्यमानं
वामे पार्श्वे प्लवगविभुना दक्षिणे लक्ष्मणेन ।
दृष्टा माध्वी दशमुखवने त्वन्निविष्टान्तरात्मे-
त्याचक्षाणश्श्रवणमधुरं वायुसूनुर्ववन्दे ॥ ९६

सीतोदन्तं हृदयसुखदं श्रोत्रपेयोदितं तं
श्रुत्वा रामो मुदितहृदयस्तं पुनश्श्रोतुकामः ।
दृष्टा सीता यदि वद सखे कीदृशी सा कथं सा
किं वाहेति श्वसनतनयं सम्भ्रमादन्वयुङ्क्त ॥ ९७

तन्वङ्गी सा मलिनवसना भूमिशय्या विवर्णा
विद्येवानध्ययनपठिता चन्द्रलेखादिमेव ।
हा हा रक्षोयुवतिजनताभर्त्स्यमाना भयार्ता
साध्वी सा त्वद्विरहविधुरा त्वत्समायत्तचित्ता ॥ ९८

विश्वासार्थं तव सुचरिता रत्नमेतद्ददाना
काकोदन्तं मम सहचरं स्मारयेति ब्रुवाणा ।

त्वामाहेदं सजलनयना त्वद्वियोगेन मोघं
मासादूर्ध्वं दयित नियतं जीवितं सन्त्यजामि ॥ ९९

नाबुद्ध त्वामिह रघुवरो रावणेनोपरुद्धां
नोपालब्धुं तव समुचितं देवि कल्याणबुद्धिम् ।
निर्दग्धाद्धा युधि शरगणैर्जीवितेशोऽपराद्धा-
नित्यन्वक्षं जनकतनया सा मयाश्वासितासीत् ॥ १००

पवनतनयनीतं मैथिलीवृत्तमित्थं
सह सहजसुहृद्भ्यामानुपूर्व्यान्निशम्य ।
उरसि शिरसि कृत्वा प्रेयसीशीर्षरत्नं
विसृजति रघुवीरो बाष्पमानन्दसान्द्रम् ॥ १०१

इति श्रीमद्वाधूलकुलजलधिकौस्तुभस्य श्रीमन्मार्गसहायशास्त्रिणस्तनूजस्य श्रीमत्सुब्बाम्बागर्भशुक्तिमुक्तामणेः श्रीसुन्दरेश्वरस्य कृतौ सुन्दररामायणकाव्ये

द्वादशः सर्गः

## ॥ अथ त्रयोदशः सर्गः ॥

अथ पवनसुतेन तेन नीतां जनकसुताकुशलप्रवृत्तिमेताम् ।
रघुपतिरवकर्ण्य कर्णपेयां मुदितमना हनुमन्तमालिलिङ्ग ॥ १

निशिचरहतकं स दारचोरं त्रिभुवनकण्टकमाहवे हनिष्यन् ।
द्रुतमवनिसुतां समानिनीषुर्निरगमदाशुगतिर्हरिप्रवीरैः ॥ २

जनपदनगराणि वर्जयन्तो गिरिनदभूरिनदीर्विलङ्घयन्तः ।
रघुवरविजयं मुहुर्नदन्तो जलधितटं हरयः समापतन्तः ॥ ३

तदनु हरिचमूर्निवेश्य तीरे निजमुटजं विरचय्य वासयोग्यम् ।
जलनिधिमभिवीक्ष्य दुर्विलङ्घ्यं सुहृदमितीव जगाद रामचन्द्रः ॥ ४

मणिमकरतिमिङ्गिलावकीर्णं घनतरतुङ्गतरङ्गसङ्कुलोलम् ।
नभ इव भगणग्रहावकीर्णं जलधरसंहतिबन्धुरं प्रपश्य ॥ ५

जलधिरिव नभो विभाति नूनं जलधिरयञ्च नभोपमो विभाति ।
जलनिधिनभसोस्तयोर्विशेषो न खलु विचिन्तयतस्तु दृश्यते मे ॥ ६

उदयिनमुडुपं तरङ्गहस्तैरुदधिरसावुपगूहतीव मन्ये ।
समधिकासितफेनमन्दहासो विधुवदनं परिचुम्बतीव सिन्धुः ॥ ७

त्रिभुवनहृदयाभिराममिन्दुं तनयवरं प्रसमीक्ष्य सिन्धुराजः ।
हृदि समधिकमोदमादधानो बहिरिव तं विशिनष्टि धीरनादः ॥ ८

रवितनय सखे विजृम्भमाणो जलधिरयं प्रतिभाति दुर्विलङ्घ्यः ।
निरवधिरतिवेलमेधमानो गुरुरिव मे दयितावियोगशोकः ॥ ९

उभयमपि सखे निरन्तराय कथय कथ प्रतरयमभ्युपायम् ।
द्वयमपि हृदयं यतो मदीयं विदळयतीव पविर्महीध्रशृङ्गम् ॥ १०

हृदयभिदुरवाचमेवमेतां समभिहितामत्रकर्ण्य राघवेण ।
विमृशति मनसि स्म वानरेशो जलनिधिसन्तरणे तदाभ्युपायम् ॥ ११

अनुपदमनयानुयायिनं तं दशवदनं शतधा वृथानुनीय ।
तदवरजवरो विभीषणाख्यः शरणमियाय शरण्यमत्र रामम् ॥ १२

तदनु रघुवरो विभीषणं तं पवनसुतानुमतेन संप्रगृह्य ।
अभयमसुरराज्यभोगभाग्यं त्ववितथगीः प्रतिशुश्रुवान्स तस्मै ॥ १३

जलनिधितरणाभ्युपायमस्मै रघुपतये स विभीषणो बभाण ।
कपिबलभरणे समर्थमेनं यमनियमैः समुपास्स्व सिन्धुराजम् ॥ १४

समभिहितमिदं तु युक्तरूपं प्रियवचनं स निशम्य राघवोऽपि ।
यमनियमपरः कुशे शयानो जलधितटे त्रिदिनानि तान्यनैषीत् ॥ १५

अनवगतरघूद्वहानुभावो न हि जलधिर्जडधीः प्रसीदति स्म ।
मिषति मतिरहो महामतीनामपि समये जडतां च याति लोके ॥ १६

सपदि रघुवरोऽवधीरितोऽसौ सजलचरं स पयोनिधानमेनम् ।
कपिबलपदचङ्क्रमानुकूलं िततनिषुराशुगमुज्जहावमोघम् ॥ १७

अशनिनिशितरामबाणवेगादतिचकितः क्षुभितश्च सिन्धुराजः ।
अनितरशरणश्शरण्यमेनं तरणमवाप तमेव बाणपाणिम् ॥ १८

रघुवर न सहेय बाणवेगं द्रुतमुपसंहर त नतानुकम्पिन् ।
तव च कपिबलस्य मां तितीर्षोर्ननु वितरामि समीहितावकाशम् ॥

नल इति मयि विश्वकर्मसूनुः स कपिवरो वितनोतु राम सेतुम् ।
कपिबलसुगमं यथासुखं तं तरिमिव भारवहामहं वहामि ॥ २०

इति लपति कृताञ्जलौ पयोधौ रघुपतिमाह कृताञ्जलिर्नलोऽपि ।
वितनितुमहमत्र सेतुबन्धं पितृवरदानबलात्प्रभुर्भवामि ॥ २१

महितजलनिधौ दिनैश्चतुर्भिः प्लवगवरैरुपनीतशैलसङ्घैः ।
सपदि रघुवरेण चोदितः सन्स खलु नलः पृथु तं बबन्ध सेतुम् ॥ २२

सरभसमथ वानरध्वजिन्या सह रघुवीरवरस्ततार सिन्धुम् ।
तदनु हरिचमूं सुवेलशैले जलधितटे विनिवेशयाञ्चकार ॥ २३

दशवदनमथाजुहाव रामो यमसदनोन्मुखमाहवाय भीमः ।
अविनतमवगीतगीतमेतं कथमहितं दयते स दुर्विनीतम् ॥ २४

निजलयसमये तु नातिदूरे दशवदनोऽपि दशान्तदीपतुल्यः ।
रघुवरविभुना युयुत्समानः सपदि वृथा ववृधे वृथाभिमानः ॥ २५

जनकदुहितरं रघूद्वहाय प्रणतियुतः स यतो न दित्सति स्म ।
निशिचरकुलमात्मना समूलं दशवदनोऽद्य बलाज्जिघांसति स्म ॥ २६

सुहृदभिहितमेष दुर्विदग्धो हितवचनं खलु नो जिघृक्षति स्म ।
जन इव भिषगौषधं मरिष्यन्नमृतमयं जगतीह रोगदिग्धः ॥ २७

हरिनिशिचरसैन्ययोः प्रवृत्तं प्रतिभयमप्रतिमं महाद्धि युद्धम् ।
सुरवरमुनिसङ्घसिद्धसाध्यैर्गगनगतैरतिविस्मयेन दृष्टम् ॥ २८

दशवदनसुतः स मेघनादः सह रघुवीरवरेण युध्यमानः ।
दशरथतनयौ स नागपाशैः करिकलभाविव वञ्चको बबन्ध ॥ २९

नृपतिवरसुतौ तु नागबद्धौ युगपदहो बत मूर्च्छितावभूताम् ।
क्षितितलपतितौ समीक्ष्य वीरौ समिति मृताविति मेनिरे तदानीम् ॥

सकपिगणविभीषणे विषण्णे दशवदने सपदि प्रमोदमाने ।
अहिभुगपनयंस्तदाविरासीन्निशिचरसोदरयोर्विषादमोदौ ॥ ३१

तदनु विषधराश्शरायितास्ते रघुवरसोदरविग्रहानुषक्ताः ।
हरिभजनधुता इवाघसङ्घाः खगपतिपक्षतिमारुतावधूताः ॥ ३२

नृपतिवरसुताङ्गमासमन्तान्मसृणमसौ स्पृशति स्म पन्नगाशः ।
तदमृतमयपाणिनाभिमृष्टौ समधिकवीर्यबलौजसावभूताम् ॥ ३३

पुनरपि परिरभ्य रामभद्रं पुनरमुना बहुमानितः सुपर्णः ।
स पवनजवनो विधूतपर्णो गगनगतेन यथागतं जगाम ॥ ३४

पुनरपि हरिवाहिनी विशीर्णा विधृतधृतिस्तु समेत्य हर्षपूर्णा ।
निशिचरपतिचोदितध्वजिन्या सह युयुधेऽसुरयूथपाश्रयिण्या ॥ ३५

युधि पवनसुतप्रवेकवीरैरतुलबलैस्तरुशैलशृङ्गहस्तैः ।
बहुषु मशकवन्निषूदितेषु प्रथितबलेषु निशाटयूथपेषु ॥ ३६

गगनलिखदगानुकारिदेहो ज्वलदनलप्रतिमानलोहिताक्षः ।
अतिविपुलगुहोपमानकर्णः समरमुखे स शुशुम्भ कुम्भकर्णः ॥ ३७

चलदचलमिव प्रभूतभूतं प्रतिभयमेनमवेक्ष्य कुम्भकर्णम् ।
भुजशिखरममुष्य वानरेन्द्राः सपदि महीधरशङ्कयाधिरूढाः ॥ ३८

असुरभुजशिरस्युपोपविष्टाः कतिचन तन्मुखमारुतावधूताः ।
कतिचन कतिनो मुखं प्रविष्टाः पुनरपि ते निरगुश्च नासिकान्तात् ॥



तदनु विषधराः शरायितास्ते रघुवरसोदराविग्रहानुषक्ताः ।
हरिभजनधुता इवाघसङ्घाः खगपतिपक्षतिमारुतावधूताः ॥

स. १३, श्लो. ३२, पृ. १३४



पटहकटुरवैर्मृदङ्गभेरीजलजघनस्वनमूर्छितैः समन्तात् ।
मुसलहतिशतैः सकेशलावैर्निशिचरचक्रचिरार्दितः प्रबुद्धः ॥*

कुम्भकर्णप्रबोधवैचित्र्यचित्रीकृतचित्तेन कवेः सूनुना योजितोऽयं श्लोकः मूले १३-तमे सर्गे ३६, ३७ श्लोकयोर्मध्येऽध्याहार्यः पृ. १३४



अमुरभुजशिरस्युपोपविष्टाः कतिचन तन्मुखमारुतावधूताः ।
कतिचन कृतिनो। मुखं प्रविष्टाः पुनरपि ते निरगुश्च नासिकान्तात् ॥

स. १३, श्लो. ३९, पृ. १३४



रवितनयहनूमदङ्गदाद्याः प्रथितबलाः पिशिताशमप्रधृष्यम् ।
लयसमयघनोपमानमेनं क्षणमपि न प्रतियोद्धुमक्षमन्त ॥
सपदि रघुवरस्तु दानवारिर्निशितशिखान्विशिखान्सरुक्मपुङ्खान् ।
वरधनुषि जवेन सन्दधानः सुरमुनिभूसुरशात्रवे मुमोच ॥

स. १३, श्लो. ४२, ४३, पृ. १

कपिबलजलधिं समीरसूनुप्रमुखमहामकरावकीर्णमेनम् ।
गज इव नलिनीं विगाहमानः सपदि विलोडयति स्म कुम्भकर्णः ॥

कतिचन दशनैर्ददंश कीशान्खरनखरैः कतिचिद्ददार वीरान् ।
कतिपयकपियूथपांश्च पद्भ्यामवनितले स पिपेष पिष्टपेषम् ॥ ४१

रवितनयहनूमदङ्गदाद्याः प्रथितबलाः पिशिताशमप्रधृष्यम् ।
लयसमयघनोपमानमेनं क्षणमपि न प्रतियोद्धुमक्षमन्त ॥ ४२

सपदि रघुवरस्तु दानवारिर्निशितशिखान्विशिखान्सरुक्मपुङ्खान् ।
वरधनुषि जवेन सन्दधानः सुरमुनिभूसुरशत्रवे मुमोच ॥ ४३

रघुवरविशिखैः स वानरादः सपदि निकृत्तशिरोधिपाणिपादः ।
पुनरभिलषितामसुद्रानिद्रामगमदहो बत राघवानुकम्पा ॥ ४४

तदनु निशिचरास्त्रिशीर्षमुख्या युधि शलभा इव ते विजृम्भमाणाः ।
अनुययुरनिवृत्तयः सहाया मृतमिव बन्धुजनास्तु कुम्भकर्णम् ॥ ४५

युधि बहुषु हतेषु यूथपेषु प्रथितबलेषु समित्रबान्धवेषु ।
धनपरिजनजीवितेष्वनास्थो दशवदनो विषसाद मानुषादः ॥ ४६

दशमुखमनुनीय मेघनादो जनकमितीव जगाद धीरनादः ।
सुरपतिजिति तात सापवादो मयि सति जीवति को न्वसौ विषादः ॥

पुनरपि समराजिरं विशंस्तौ सपदि नरापशदौ विषादहेतू ।
निशिचरकुलनाथ पश्यतस्ते यमसदनं प्रहिणोमि मा विषीद ॥ ४८

अनुपममनुभावमिन्द्रशत्रोः समरमुखे सुरसङ्घसिद्धसाध्याः ।
बलिमखभुवि विक्रमं तु विष्णोरिव सपदीह पुनर्विलोकयन्तु ॥ ४९

सुरपतिजिदसौ प्रगल्भवादः पितरमितीव समीर्य मेघनादः ।
यमनियमपरोऽनलं जुहाव प्रथितमहास्त्रशतान्यथाजुहाव ॥ ५०

दशवदनसुतेन हूयमाने पवनसखेऽस्त्रगणे च सन्निधाने ।
ग्रहगणभगणैः सचन्द्रसूर्यैर्गगनतलं त्रसति स्म भूश्चकम्पे ॥ ५१

रथवरमधिरुह्य यातुवीरः सपदि रणाजिरमाप दुर्निवारः ।
हरिबलमवधीददृश्यरूपो निशितशिखैर्विशिखैरदृश्यरूपैः ॥ ५२

निशिचरहतकेन कूटयोद्धा नृपतिसुतौ च पितामहास्त्रबद्धौ ।
हरिबलमभवत्तदा विसंज्ञं पवनसुतं तमृते प्रमीतकल्पम् ॥ ५३

दशवदनसुतो रणावमर्दे कदनमितीव महद्विधाय घोरम् ।
निजविजयमिवाभिधातुमाजौ रजनिचरो निजमालयं जगाम ॥ ५४

तदनु सह विभीषणेन धीमानसुरकिशोरशरोत्करावमृष्टान् ।
रणभुवि परितः प्लवङ्गवीरान्निशि परिशीलितुमानशे हनूमान् ॥ ५५

कतिचन विनिकृत्तपाणिपादान्कतिचन भिन्नभुजान्तरालदेशान् ।
कतिचन कलयाञ्चकार वीरान्स्रवदसृगुक्षितविग्रहान्हनूमान् ॥ ५६

दशवदनकृतैनसो विपाकाद्दशरथराजकुमारपुण्यलेशात् ।
असुरशितशरोत्कराभियुक्तोऽप्यसुभिरहो न हि जाम्बवान्वियुक्तः ॥

अतिनिशितसुरारिबाणविद्धो निरतिशयव्यथया निमीलिताक्षः ।
पवनसुतमभिज्ञया विदित्वा नतिविनतं तमुवाच ऋक्षराजः ॥ ५८

वयमिह समरे प्रमीतकल्पा अपि भवतासुमता सतासुमन्तः ।
पवनज परमा गतिस्त्वमेषामसुरकिशोरशरप्रमाथितानाम् ॥ ५९

पुनरपि पितृसन्निभानुभावं सपदि निदर्शय ते महानुभाव ।
रणभुवि पतितौ गतासुकल्पौ कुरु नरनाथकिशोरकौ विशल्यौ ॥ ६०

हिमगिरिमतिलङ्घ्य वर्तमानं रजतवृषाचलशृङ्गमध्यसंस्थम् ।
त्वरितगतिरितो भवान्प्रयातो व्रजतु मनोजवसौषधिक्षितीध्रम् ॥

विलसति मृतजीवनीति तस्मिन्प्रथितमहौषधिराख्यया गुणेन ।
अमृतमिव पुरा स वैनतेयो द्रुततरमानय तामिहाञ्जनेय ॥ ६२

इति समभिहितो मरुत्सुतोऽसौ लघुतरमेत्य महौषधिक्षितीध्रम् ।
तदितरसुमहौषधीश्च तिस्रः प्रसभमगेन समं समानिनाय ॥ ६३

मनुजपतिसुतावजिघ्रपत्तौ क्षणमिव गन्धमसौ महौषधीनाम् ।
सपदि रघुवरौ तदा विशल्यौ युगपदहो निरुजावुभावभूताम् ॥ ६४

अथ वनचरयूथपाः समस्ताः समिति निशाचरयूथपैर्विशस्ताः ।
निशि सुखशयिता इव प्रबुद्धा उषसि महौषधिगन्धिनानिलेन ॥ ६५

पुनरपि सुमहौषधिप्रभावादधिगतवीर्यबलौजसः प्लवङ्गाः ।
दव इव परितः पलाशसङ्घान्समरभुवं सहसा समेयिवांसः ॥ ६६

निशिचरनगरीं पुनश्च दग्ध्वा रणभुवि कुम्भनिकुम्भकौ निहत्य ।
पुनरसुरकिशोरमाचकर्षू रवितनयप्रमुखा वलीमुखास्ते ॥ ६७

नृपतिवरसुतं तमिन्द्रजेता समिति विजेतुमिवाक्षमो रथस्थाम् ।
जनकदुहितरं निहत्य मिथ्या समरपराङ्मुखमेनमाततान ॥ ६८

निशिचरहतकेन या हता सा जनकसुता कृतकैव नो यथार्था ।
मुहुरिति परिसान्त्वितो विषण्णो रघुपतिरर्थविदा विभीषणेन ॥ ६९

समरविजयदो निकुम्भिलायामसुरकिशोरविधीयमानहोमः ।
रघुपतिरवसीयते न यावत्पुनरनुजं प्रजिघाय तद्वधाय ॥ ७०

दशरथतनयः स राघवश्चेदवितथगीरनुजोऽपि लक्ष्मणश्चेत् ।
रिपुवधमविधाय सन्निवर्ते न हि समरादिति लक्ष्मणः प्रतस्थे ॥ ७१

प्रतिभयमनयोरभूतपूर्वं सपदि नराशरयोरदृष्टपूर्वम् ।
समभवदुभयोर्महाद्धि युद्धं गगनगतैरतिविस्मयेन दृष्टम् ॥ ७२

अनितरपरमास्त्रजय्यमेनं दशमुखसूनुमवेत्य राजसूनुः ।
विषधरसदृशं तदैन्द्रमस्त्रं हृदि विमृशन्विजहावमोघमस्मिन् ॥ ७३

असुरवरशिरश्शिरस्त्रयुक्तं रघुवरवीरशरः स सञ्जहार ।
असुरहितमहो सुराहितं तं त्वसुरहितं भुवि पातयाञ्चकार ॥ ७४

अशिथिलमनुजं समालिलिङ्ग त्रिदशरिपोर्विजयेन राजमानम् ।
रघुपतिरधिरोप्य तं निजाङ्के विशिखशिखाव्रणितं पराममर्श ॥ ७५

तनयमथ निशम्य लक्ष्मणेन प्रणिहतमिन्द्रजितं मनःप्रियं तम् ।
तरुरशनिहतो यथाशरेशो भृशमकृशान्निपपात पुत्रशोकात् ॥ ७६

कथमपि स चिरेण लब्धसंज्ञो विधुरहितो बडबाग्निनेव सिन्धुः ।
हृदि समधिकशोकदह्यमानो दशवदनोऽवनिजां जिघांसति स्म ॥ ७७

अकरुणमसुरं कृपाणपाणिं जनकसुताहनने कृतप्रयाणम् ।
असमुचितसमुद्यमादमुष्मात्सचिववरो दशकन्धरं रुरोध ॥ ७८

पुनरपि स सभां प्रविश्य राजा दनुजवरान्प्रजिघाय शस्त्रहस्तान् ।
अगणितविषयान्प्रहस्तमुख्यानरिसमुदायपराभवाय भूयः ॥ ७९

पुनरपि तुमुलं महत्प्रवृत्तं निशिचरवानरसैन्ययोर्नियुद्धम् ।
असुरवरशरार्दिताः प्लवङ्गाः शरणमहो रघुवीरमेव वव्रुः ॥ ८०

द्युमणिरिव ततः प्रविश्य संख्ये रघुपतिरात्तशरः सरुक्मपुङ्खैः ।
अतिनिशितशिखैर्मयूखसङ्घैर्घनपटलानि यथाशरान्बिभेद ॥ ८१

रघुवरपरमास्त्रमोहितास्ते रजनिचरा रघुवीरदुर्भ्रमेण ।
स्वजनमपि तदाविभावयन्तः शरनिकरैरितरेतरं निजघ्नुः ॥ ८२

इति रघुपतिना मुहूर्तमात्राद्युधि निहतेषु समस्तयूथपेषु ।
रजनिचरपतिर्हतावशिष्टः पुनरनिवर्तनमाहवं प्रविष्टः ॥ ८३

अरघुवरमुतादशाननं वा जगदिदमद्य भवेन्न सोभयं स्यात् ।
इति रघुपतिरुच्चरन्समुच्चैरवितथगीः प्रथनोन्मुखो बभूव ॥ ८४

रणभुवि समवेतयोः प्रवृत्तं रघुवररावणयोर्महद्धि युद्धम् ।
अनुपममुभयोरभूतपूर्वं प्रतिभयमादिकवेर्गिरामगम्यम् ॥ ८५

असुरकुलविनाशमूलहेतुं सहजनिमाशु दशाननो जिघांसुः ।
प्रतिहतिरहितामरातिहन्त्रीं पविसदृशीं प्रजहावमोघशक्तिम् ॥ ८६

रघुवरविजयप्रधानभूतं द्रुतमवितुं सुहृदं प्रचण्डशक्तेः ।
सपदि स रघुशाक्करानुजन्मा त्वरितगतिर्निरगाद्गृहीतधन्वा ॥ ८७

रजनिचरकरप्रमुक्तशक्तेर्बलिमुपहृत्य निजासुभिः स धीरः ।
प्रियतरमवति स्म तं विपन्नं व्रतमिदमेव महात्मनां रघूणाम् ॥ ८८

निपतितमनुजं गतासुकल्पं सपदि विभिन्नमहाभुजान्तराळम् ।
स्रवदसृजमवेक्ष्य लक्ष्मणं तं व्यथितमना रघुपुङ्गवो रुरोद ॥ ८९

ननु रणभुवि वत्स वत्सल त्वं यदिह गतायुरिवाद्य हन्त शेषे ।
किमु मम समरेण जीवितैर्वा मम किमरालिजयेन जायया वा ॥ ९०

अनुजनपदमाप्यते हि बन्धुर्ननु सुलभञ्च तथा कळत्रजातम् ।
कथमिव सदृशस्त्वयानुजन्मा मितहितवाक् सुलभोऽनुकूलकर्मा ॥ ९१

इति विलपति राघवेऽतिदीनं तमनुनयन्भिषगूचिवान्सुषेणः ।
रघुवर न मृतस्तवानुजन्मा निरतिशयव्यथया तु मूर्च्छति स्म ॥ ९२

वदनरुचिरमुष्य दर्शनीया न हि विवृणोति मृतस्य यादृशी स्यात् ।
स नियतमचिरेण लब्धसंज्ञो भवति रघूद्वह मा स्म भूर्विषण्णः ॥ ९३

इति रघुपतिमीरयन्सुषेणः सपदि सदागतिसूनुमाबभाषे ।
पुनरपि मृतजीवनीं हिमाद्रेर्ननु दयया त्वरयानयाञ्जनेय ॥ ९४

स पवनतनयस्तदैवमुक्तो द्रुतगतिरोषधिपर्वतं प्रपद्य ।
तदुदितसुमहौषधेरलाभात्क्षितिधरमेव समानिनाय वेगात् ॥ ९५

सुमतिरपि महीधरे निगूढाः सपदि विचित्य महौषधीश्चतस्रः ।
निशिचरवरशक्तिमूर्च्छितं तं दशरथपुत्रमजिघ्रपत्सुषेणः ॥ ९६

समजनि मृतजीवनीप्रभावाद्रघुकुलजो विरुजस्तथा विशल्यः ।
सुखशयित इव प्रगे प्रबुद्धो निरतिशयैधितसत्त्ववानुदस्थात् ॥ ९७

विरुजमवरजं विमुक्तमूर्च्छं निरतिशयानुशयः स्पृशन्करेण ।
निरवधिनिबिरीसनिःसृतास्रैः प्रमदभरेण रघूद्वहोऽभ्यषिञ्चत् ॥ ९८

मम सुचरित वत्सलानुजन्मन्सुचरितलेशवशेन वीरकर्मन् ।
पुनरपि कलयामि मातृगर्भाज्जनितमुतान्तकवक्त्रनिर्गतं त्वाम् ॥ ९९

अशरणशरणे तु रावणेन त्वयि मरणं गमिते सुदारुणेन ।
किमु मम विजयेन जीवितेन प्रियतमयामितया तया पृथिव्या ॥ १००

इति वदति रघूद्वहे विमोहादनुजकृते प्रियतामृतार्द्रचित्ते ।
असमयदयमग्रजं तमेवं प्रतिवदति स्म स लक्ष्मणो विषण्णः ॥ १०१

असदृशमयशस्यमप्रतिष्ठं सगरकुलोद्भव भाषितं तवास्ते ।
कृतमनुजकृते प्रतिश्रुतं को जगति विपश्चिदपश्चिमो जहाति ॥ १०२

प्रबलरिपुवधं विधेहि तावद्भगवति भास्वति नैति यावदस्तम् ।
समरभुवि तथा कृतां प्रतिज्ञां ननु वितथां सकलज्ञ मा कृथास्त्वम् ॥

रघुपतिरनुजेन भाषितं तं महितमिदं समयोचितं निशम्य ।
तितनिषुररिशेषमस्तशेषं दशमुखमाजुहुवे पुना रणाय ॥ १०४

सरभसमथ रावणो रणाग्रं नवमधिरुह्य रथं समाजगाम ।
दशरथतनयस्तमभ्युदस्थाद्रथमधिरुह्य समातलिं मघोनः ॥ १०५

रणभुवि समवेतयोर्युयुत्स्वोः पुनरितरेतरमेतयोर्जिघांस्वोः ।
जयदमुपदिदेश कुम्भजन्मा रविहृदयं प्रणताय राघवाय ॥ १०६

पुनरपि समरे तयोः सुघोरे दशमुखराघवयोः प्रवर्तमाने ।
दिवि भुवि दिशि पश्यतां जनानां न हि वदने दशने द्रवो बभूव ॥

न तपति तपनो न वाति वायुर्नदति पुनर्गगनं प्रकम्पते भूः ।
सुरनरपशुपक्षिकीटकूटाः सपदि भवन्ति भयेन निर्विचेष्टाः ॥ १०८

निशिचररघुवीरमुच्यमानैः पुनरितरेतरमस्त्रशस्त्रजालैः ।
अपिहितमभवद्दिगन्तराळं पिहितमभूच्च तथा नभोऽन्तराळम् ॥ १०९

रघुपतिरथ वा दशाननो वा युधि विजयेत म्रियेत वाद्य विद्धः ।
अवितथशपथं परस्परं ताविति च वितेनतुरस्तजीवितास्थौ ॥ ११०

समभुजबलिनौ समानमानौ समशपथौ सदृशास्त्रशस्त्रविद्यौ ।
सुचिरतरमुभौ युयुत्समानौ न हि समराद्विरतौ विजेष्यमाणौ ॥१११

दशवदनशिरः सहस्रकृत्वो दशरथसूनुरसौ निकृन्तति स्म ।
पुनरजनि यथाप्रकारमेतन्न पुनरहो बत रावणो हतोऽभूत् ॥ ११२

अनिहतमसुरं च राघवास्त्रैः प्रतिहतमस्त्रममुष्य राक्षसास्त्रैः ।
रघुपतिमभिवीक्ष्य चिन्तयन्तं सुरपतिसारथिरित्युवाच वाचम् ॥

न हि किमपि तवास्ति बोधितव्यं समरविशारद राघवास्त्रविद्वन् ।
मुखरयति तथापि मां रसज्ञा यदि भवतः स्मरणीयमभ्यनुज्ञा ॥११४

त्रिभुवनहितकुम्भजोपदिष्टं दशमुखमारणकारणाय तुभ्यम् ।
स्मर रघुवर वैधसं तदस्त्रं भुवनरिपोर्विजयाय मा चिराय ॥ ११५

अयमितरमहास्त्रसाधनेन द्रुहिणवरेण सुरैर्नरैरजय्यः ।
सुरवरकथितस्तदन्तकालः सपदि समापतितः स एव कालः ॥ ११६

इति निगदति सारथौ मघोनो रघुपतिरेष समाहितोपलब्धिः ।
दशवदनपरासनप्रवीणं सपदि शरासनमाददे वरेण्यम् ॥ ११७

अवितथमथ वैधसं तदस्त्रं स्मृतिगतिमात्रकृतात्मसन्निधानम् ।
दशवदनवधाय चापदण्डे विधिवदसौ समधत्त युद्धचण्डः ॥ ११८

लयसमयकृतान्तदण्डतुल्ये त्रिभुवनभीमशरासने गृहीते ।
उरसि शरसुखप्रवेशहेतोरिव हृदयं गळति स्म रावणस्य ॥ ११९

सुरगणमुनिसङ्घसिद्धसाध्यैर्गगनगतैः सभयं समीक्ष्यमाणः ।
प्रतिभयमभिमन्त्र्य भीमवेगं रघुपतिराशुगमुज्जहावमोघम् ॥ १२०

सपदि शरवरः स वज्रसारो रजनिचरोरसि पातितश्शरारुः ।
अनितरशरभेद्यमेतदीयं हृदयमभिन्त्त दुरन्तपापवृन्तम् ॥ १२१

क्षितिधर इव वज्रकृत्तपक्षो निशितशिखाशुगतिप्रभिन्नवक्षाः ।
सममरविसृष्टपुष्पवर्षैर्दशवदनो निपपात निर्गतासुः ॥ १२२

इति रमारमणेन परात्मना भगवता रघुनायकरूपिणा ।
दशमुखे भुवनत्रयकण्टके युधि हते न वसन्ति सुखेन के ॥ १२३

विगतभीर्भगवानरुणो बभौ पुनरसङ्कुचितो मरुदाववौ ।
हुतवहोऽपि यथातथनामकः सुरगणाः परिरब्धसुराङ्गनाः ॥ १२४

रघुपतिः सविभीषणलक्ष्मणः सपदि सूर्यसुतेन हनूमता ।
परिवृतो निहतारिगणो रणे सुरगणैर्मघवानिव राजते ॥ १२५

तदनु दाशरथिः समुदारधीर्दशमुखावरजं हतपूर्वजम् ।
सकरुणं सुचिरं परिदेविनं सपदि सान्त्वयति स्म विभीषणम् ॥ १२६

ननु गृणन्ति सखे मरणान्तिकं सुचिरवैरमपीह शरीरिणाम् ।
अधिगतं खलु वाञ्छितमावयोः कुरु तवाग्रजनेरुदकक्रियाम् ॥ १२७

बहुधनैः क्रतुभिस्तु स हीष्टवान्गुरुतराणि तपांसि स तप्तवान् ।
स निगमागमशास्त्रविदां वरो दशमुखोऽर्हति संस्कृतिमुत्तमाम् ॥

इति निशम्य रघूद्वहभाषितं दशमुखावरजश्श्रुतिसम्मतम् ।
सपदि पूर्वजनेर्विधिचोदितं स विदधे पितृमेधमहाविधिम् ॥ १२९

ततो दशरथाङ्गनाजठरशुक्तिमुक्तामणेः
पदाम्बुजपरायणं तदभिधानपारायणम् ।
विभीषणमदूषणं समभिषिच्य रामाज्ञया
निशाचरनृपश्रिया सह युयोज रामानुजः ॥ १३०

इति श्रीमद्वाधूलकुलजलधिकौस्तुभस्य श्रीमन्मार्गसहायशास्त्रिणस्तनूजस्य श्रीमत्सुब्बाम्बागर्भशुक्तिमुक्तामणेः श्रीसुन्दरेश्वरस्य
कृतौ सुन्दररामायणकाव्ये
त्रयोदशः सर्गः

## ॥ अथ चतुर्दशः सर्गः ॥

आजौ दशाननवधानुकथासुधायास्तत्पारणां प्रति चिराय समुत्सुकायाः
आवेदनाय सरयं दयितासमीपमाहूय वायुतनयं प्रजिघाय रामः ॥

रामानुशासनमसौ शिरसा हनूमानादाय वायुतनयः सहसा विधेयः
सीतासमीपमुपगम्य कृतानतिस्तां देवीमुवाच परया मृजया विहीनाम्

वैदेहि देवि कुशली सह लक्ष्मणेन त्वामन्वयुङ्क्त कुशलं तव जीवितेशः
बाहाबलेन विनयेन च लक्ष्मणस्य शत्रूञ्जिगाय स विभीषणवाकसहायः

पापेन येन परदारकृतादरेण कष्टां दशां गतवती भवतीह साध्वी ।
युद्धे स यातुहतको निहतो गतायुर्भद्रे समाश्वसिहि पश्यसि रामभद्रम्

सन्देशमेनमभिधेहि मम प्रियायै तस्याः समानय पुनः कुशलं प्रियायाः
इत्यादिशन्स विजयेन विराजमानो मां प्राहिणोत्सुचरिते तव सन्निधानम्

आकर्ण्य रामविजयं खलु कर्णपेयमालोचनामृतमवाच्यसुधायमानम् ।
आत्मानमन्यपुरुषा अपि विस्मरेयुरानन्दमग्नहृदयाः किमु रामजाया

भर्तुर्जयं जनकजा युधि सावकर्ण्य सन्तोषमग्नहृदया क्षणमास्त जोषम्
प्रत्युत्तरं किमपि वक्तुमभूदनीशा प्रायः सुखेऽपि बहुले फलमेकरूपम् ॥

संस्मारितात्रभवती रघुवीरपत्नी प्रत्युत्तरं प्रति पुनः पवमानजेन ।
नाथामि नाथमवलोकयितुं जयश्रीराज्यमानमिति तं प्रतिवाचमूचे ॥

सीताभिलाषमनिलात्मजभाषितेन रामोऽवगम्य स विभीषणमित्यवादीत्
स्नातां समानय सखे सहसैव सीतां हृद्याङ्गरागमणिभूषणचारुवस्त्राम्

स्नातानवद्यनवभूषणशुभ्रवस्त्रा कस्तूरिकाञ्चितमनोज्ञतमालपत्रा ।
रामान्तिकं सपदि रावणसोदरेण सानायि दिव्यशिबिकामधिरोप्य सीता

लज्जावशेन जनसंसदि रामपत्नी संव्यानसम्यगवकुण्ठितगात्रयष्टिः ।
सस्वेदरोमकलिकोद्गमजातकम्पा सस्नेहविस्मयमुदं दयितं ददर्श ॥

आकर्णदीर्घनयनं नयनाभिरामं रामं मनोरममनिन्द्यगुणाभिरामा ।
पेपीयते स्म चिरदृष्टमुपोषिताभ्यामानन्दबाष्पसमुदञ्चितलोचनाभ्याम्

पार्श्वस्थितां स दयितां विनयानताङ्गीं
प्रस्विन्नगात्रलतिकां प्रथमानशोकाम् ।
अन्तः प्रधूमितमिवौर्वमधृष्यरोष-
मुद्योतयन्सपदि वाचमुवाच रामः ॥ १३

भद्रे जिता त्वमसि वैरिजयेन संख्ये शत्रुश्च तत्परिभवो युगपन्निवृत्तः ।
सम्पादितस्तु दयिते प्रतिकूलदैवाद्रोषस्तथैव विजितो मम पौरुषेण ॥

वातात्मजस्य सलिलाशयलङ्घनञ्च
युद्धे विकर्तनसुतस्य पराक्रमश्च ।
सख्युश्श्रमोऽपि विदुरस्य विभीषणस्य
मत्पौरुषञ्च सफलं सफलश्श्रमोऽभूत् ॥ १५

हा हा प्रिये दशमुखस्य गृहोषितां त्वां दुष्टेन दुष्टनयनेन च तेन दृष्टाम् ।
चारित्रसंशयगतां पुनराजिघृक्षेद्रामः कथं नु कुलमाविलयन् रघूणाम् ॥

एता दिशो दश विदेहसुते व्यपेहि स्वच्छन्दतो रघुवरेण न तेऽस्ति कार्यम्
बुद्धिं निधेहि भरते ननु लक्ष्मणे वा रक्षोऽधिपे कपिवरे यदि वाभिलाषः

तिर्यक्प्रसृप्तमिव दीर्घमलातशल्यमत्यन्तदुर्व्यथमरुन्तुदमप्रसह्यम् ।
आकर्ण्य कर्णपरुषं दयितोदितं तद्दन्दह्यमानहृदया तमिदं जगाद ॥१८

वृत्तञ्च शीलमविदन्निव मे कुलञ्च नाथोचितं तव समुच्चरितुं किमेवम्
रूक्षं त्वयोदितमसज्जनसंप्रदायं हा हन्त वज्रमिव मे हृदयं भिनत्ति ॥

हा नाथ मां प्रति यथैव विशङ्कसे त्वं नाहं तथास्मि नियतं प्रजहाहि शङ्काम्
कासां प्रचारकमनूह्य चिदङ्गनानां जातिं विशङ्कितुमनौपयिकं तवैवम्

मां दुर्बलां बलवतो हरतो बलेन
तस्मिन्वने तु विजने यदि रावणस्य ।
स्पर्शं गतास्मि किमहं प्रभवाम्यनीशा
तत्रापराध्यति विधिर्न भवान्न चाहम् ॥ २१

यन्मे वशे स्थितमिदं तु तवैव वेद्यं त्वय्येव नाथ निहितं हृदयं मदीयम्
तत्रापि दोषलवमीदृशमूहसे त्वं दैवस्य दुर्विलसितं किमहं ब्रवीमि ॥

एतादृशी मनसि ते विपरीतशङ्का यद्यस्ति किं न विवृता हनुमन्मुखेन ।
मोघो न किं नु कुलटामपदिश्य भार्यां भूयाञ्श्रमस्तव महोदधिलङ्घनादिः

भर्त्रावधीरितमिदं पुरुषार्थदूरं का वा परेतसदृशं बिभृयाच्छरीरम् ।
अह्नाय कल्पय चितिं मम तल्पकल्पामात्मानमाज्यमिव हव्यवहे जुहोमि

आज्ञापितः सुभगया स विदेहपुत्र्या रामानुजोऽग्रजदृगञ्चलसूचिताज्ञः
काष्ठैः सकष्टमतनिष्ट चितामभीष्टां कष्टो हि हन्त कठिनेषु विधेयभावः ॥

साध्वी विदेहदुहिता दयितं प्रणम्य
सम्यक्समिद्धमपि तं नियता चिताग्निम् ।
स्थित्वा तयोरभिमुखं विनयानताङ्गी
बद्धाञ्जलिर्हुतवहं प्रयतोपतस्थे ॥ २६

रक्षोगृहे विधिवशेन चिरोषितां मां रामोऽवगच्छति यथा परिशुद्धभावाम्
कालत्रयेऽपि करणत्रितयेन चाग्ने मह्यं प्रसीद भगवन्भुवनैकसाक्षिन् ॥

रामान्मनो मम यथा न कदा व्यपेयात्त्वं हव्यवाहन तथा भगवन्प्रसीद ।
कृच्छ्रेऽपि जातु न यथातिचरामि रामं मह्यं तथैव पवमानसख प्रसीद ॥

स्तुत्वैवमग्निमभिकक्ष्य परिक्रमन्ती सर्वात्मना च रघुवीरमनुस्मरन्ती ।
सुस्निग्धमुग्धमिव पल्लवतल्पमद्धा हन्ताश्रयाशमाविशद्दयिते निराशा ॥

तस्यामशेषसुरवानरराक्षसानां प्रत्यक्षमेव पवमानसखे विशन्त्याम् ।
हा हेति चुक्रुशुरहो बत यातुनार्यो रामादृते मुमुचुरश्रु जनाः समस्ताः

इन्द्रादयो दशदिशां प्रभवस्तदानीं पद्मासनश्च भगवान्वृषभध्वजोऽपि
सूर्यप्रभैर्दिवि भवैर्महितैर्विमानैराविर्बभूवुरिह पङ्क्तिरथेन साधम् ॥३१

किं नावगच्छसि विभो जगदन्तरात्मन्नात्मानमद्य रघुवीर परात्मरूपम्
आज्याहुतिं निपतितामिव मन्त्रपूतामग्नौ विदेहतनयां किमुपेक्षसे त्वम्

नारायणः स भगवानसि शार्ङ्गधन्वा
सीतापि सा भगवती खलु लोकमाता ।
आराधितो दशमुखस्य वधाय देवै-
स्त्वं मानुषेण वपुषा भुवमागतोऽसि ॥ ३३

रक्षोऽधिपस्य भुवनत्रयकण्टकस्य विध्वंसनेन भुवनानुजिघृक्षयैव ।
कार्यं तवावसितमत्र पुराणपुंसो मायासमाकलितमानुषविग्रहस्य॥ ३४

कर्ता समस्तजगतां चतुरास्यरूपो भर्ता गदासिवरशङ्खरथाङ्गपाणिः ।
हर्ता त्वमेव निटिलज्वलनोऽपि रुद्रस्तुर्यस्त्वमेव वरदस्त्रिगुणैरपेतः ॥

सर्वज्ञ सर्वग निरङ्कुश सर्वशक्ते सच्चित्सुखात्मक निरञ्जन निर्विकल्प ।
संपूर्ण सर्वगुण निर्गुण सर्वरूप निर्नामरूप निरुपाधिक केवलात्मन् ॥

त्वामेव राम कवयो मुनयः पुराणी वाणी च शाश्वतमजं पुरुषं पुराणम्
अव्यक्तमव्ययमचिन्त्यगुणस्वरूपमानन्दचिद्घनमतद्द्वयमामनन्ति ॥

येन त्वया त्रिभुवनानुजिघृक्षयैव क्रान्तं पुरा त्रिभिरहो क्रमणैस्त्रिलोकम् ।
बध्द्वा बलिं तमसुरं परिभूय तस्य भीताय भूतिरमिता प्रददे मघोने ॥

त्रय्यन्तवेद्यविभवाय परापराय मायामयाय मुनिमानसहंसकाय ।
सीतासखाय शतमन्मथसुन्दराय तुभ्यं नमो भुवनमङ्गळविग्रहाय ॥

त्वत्तश्चराचरमिदं जगदाविरासी-
त्त्वत्तोऽहमेष भगवान्वृषभध्वजोऽपि ।
त्वत्तोऽधिकः खलु न कोऽपि जगत्त्रयेऽस्मि-
स्त्वत्तः परं तु जगतीह न किञ्चिदस्ति ॥ ४०

चिद्रूपिणो दिनमणिर्ज्वलनो हिमांशुर्भासैव भाति तव भासयते च विश्वम्
उन्मेषणेन भवतस्तु निमेषणेन जायेत राम जगतः प्रभवो लयश्च ॥ ४१

त्वय्येव जातमखिलं खलु लोकजातं
सर्वं प्रतिष्ठितमिदं त्वयि सृष्टिजातम् ।
त्वय्येव याति विलयं सकलं तदेव
त्वय्युद्भवस्त्वयि लयस्त्वयि संस्थितिश्च ॥ ४२

मोघा न ते स्तुतिरमोघपराक्रमस्य मोघं न दर्शनममोघमहाबलस्य ।
ये त्वां पुराणपुरुषं पुरुषा भजन्ते तेषां न खल्विह परत्र पराभवः स्यात्

ब्राह्मीमिमामवितथामवकर्ण्य वाणी-
मङ्के निधाय सुभगामनवद्यशीलाम् ।
उत्थाय वायुसचिवः सहसा चिताया
रामाय भूमितनयामुपदामिवादात् ॥ ४४

रक्षोगृहे विधिवशेन चिरोषिताम-
प्यज्ञातदुष्कृतलवामनवद्यशीलाम् ।
त्वय्येव भक्तिभरितां त्वयि सक्तचित्ता-
मादत्स्व राम दयितामिति तं शशास ॥ ४५

शीलं कुलञ्च पतिभक्तिमयोनिजाया जानामि हव्यवह तामनवद्यशीलाम्
सामान्यलोकपरिवादनिवारणाय सैषान्वकारि हि मया समुपेक्षितेव

देवप्रसादमिव पाणियुगेन सीतामादाय तां समुपवेश्य निजाङ्कमध्ये ।
विश्लेषदुःखमवधूय तया नु भूयो रामो रराज भगवानिव मासहायः

देवेन चन्द्रमकुटेन सभाज्यमानः स्वर्गागतेन जनकेन च शस्यमानः ।
इन्द्रेण तेन वरदेन च पूज्यमानो रामः स्वदेशगमनाय कृतप्रयाणः ॥

आपादितं प्रियसखेन विभीषणेन कौबेरपुष्पकविमानममानवीनम् ।
आरुह्य भूमिसुतया सह लक्ष्मणेन रामः सकीशपिशिताशपतिः प्रतस्थे

वातावधूत इव शारदवारिवाहस्तस्मिन्खमुत्पतति संजवने विमाने ।
रामो विलोक्य नभसो भुवमासमन्ताद्देवीमुवाच कुतुकोपचितान्तरङ्गाम्

कलयायताक्षि ननु विश्वकर्मणा भुवि निर्मितामिह विचित्रकर्मणा ।
नगरीं त्रिकूटशिखरोपरि स्थितां प्रतिबिम्बितामिव जलेऽमरावतीम् ॥

सैषा मानिनि युद्धभूरिह समारब्धं त्वदर्थं महा-
युद्धं वानरराक्षसप्रमुखयोरत्यन्तविक्रान्तयोः ।
तस्मिन्कुम्भनिकुम्भकप्रभृतयः शस्ताः प्रहस्तादयः
प्रत्येकं गणशश्च ते विशसिता बर्हिर्मुखारातयः ॥ ५२

अत्रैव त्रिदशारिपुर्महेन्द्रजेता सञ्जघ्ने रणनिपुणेन लक्ष्मणेन ।
निद्राणो भुवनरिपुः स भीमरूपो दध्वंसे मम विशिखेन कुम्भकर्णः ॥

येन त्वं प्रसभमहारि पापबुद्ध्या क्षीणायुः स खलु तवानुभावलेशात् ।
लोकानां सुमुखि भयाद्विरावितानां क्षेमाय क्षयमिह रावणोऽपि निन्ये

संपश्य योजनशतायतमत्र सेतुं मध्येपयोनिधि मदर्थमसौ बबन्धे ।
नातारि केवलमसौ जलधिस्तु येन त्वद्विप्रयोगजनितो मम दीर्घशोकः

रत्नाकरोत्तरतटं वयमागताः स्मो यस्य प्रसादमभिलष्य मयाम्बुराशेः
नीतास्त्रयश्च दिवसाः क्षणदाश्च तिस्रो मध्येऽत्र दर्भशयने नियमेन साध्वि

रम्यारामा रुचिरनळिनी दृश्यमाना पुरस्ता-
त्किष्किन्धा सा कपिवरपुरी यत्र वाली हतोऽभूत् ।
विद्युन्माली घन इव समालक्ष्यते तत्परस्ता-
द्यस्मिञ्छ्ङ्गे प्लवगपतिना सङ्गमो ऋश्यमूकः ॥ ५७

सैषा सुरम्यवनराजिविराजमाना पम्पा वियोगिजनचित्तविभेदिशम्पा
यद्रोधसि प्रियतमे तव विप्रयोगदुःखाद्दिवानिशमहं विललाप सीते ॥

अस्मिन्नावसथे साध्वि सा मां शबरतापसी ।
वर्षीयसी महीयस्यानन्दयद्वरिवस्यया ॥ ५९

आबध्यायतबाहुभ्यां कबन्धो मां च लक्ष्मणम् ।
निकृत्तबाहुरत्रैव शापान्मुक्तोऽभवत्प्रिये ॥ ६०

पापीयसा दशास्येन युध्यमानो महामनाः ।
जटायुरभवत्तत्र गतायुस्त्वत्कृतेऽनघे ॥ ६१

जनस्थानमिदं भद्रे निदानमखिलापदाम् ।
यद्वृत्तमिह वैदेहि तवैव विदितं खलु ॥ ६२

अस्माकमाश्रमपदं सरसीरुहाक्षि पश्यावयोश्च रुचिरामिह पर्णशालाम्
सैषा प्रसन्नसलिला विपुलानुकूला गोदावरी श्रितजनावनकेळिलोला

एतत्तदाश्रमपदं कलशोद्भवस्य ह्येतत्सुतीक्ष्णतपसस्तु सुतीक्ष्णनाम्नः ।
एतत्तदेव शरभङ्गमुनेर्यमिन्द्रः स्वर्गं निनीषुरिह साध्वि समाजगाम ॥

विराधवनमेतद्धि यत्र रक्षोवधाध्वरः ।
दीक्षितेन मयारब्धस्तापसाभयदक्षिणः ॥ ६५

अत्रेः कुलपतेरत्र निलयो हृदयङ्गमः ।
यत्राङ्गरागालिप्ता त्वमनसूयेऽनसूयया ॥ ६६

सोऽयं विचित्रकटको ननु चित्रकूटो यद्रम्यसानुषु सुखेन वयं न्यवात्स्म
जैवातृकः स हि निवर्तयितुं वनान्मां यत्रैव शोकभरितो भरतः समायात्

इन्दीन्दिरसमानाभा वन्दारुजनदन्तुरा ।
कलिन्दनन्दिनी सेयं मन्दं वहति सुन्दरि ॥ ६८

त्वङ्गत्तुङ्गतरङ्गाढ्या सेयं सुरतरङ्गिणी ।
मुग्धे दुग्धामिवादुग्ध भगीरथमनोरथान् ॥ ६९

पुण्ययोरुभयोर्मध्ये गङ्गायमुनयोरिमम् ।
आगताः स्मो वयं देवि भरद्वाजाश्रमं पुनः ॥ ७०

अदूरे दृश्यमानं तच्छृङ्गिबेरपुरं प्रिये ।
तत्परस्ताच्च सरयूरयोध्या सैव नः पुरी ॥ ७१

अभिवाद्य भरद्वाजं मुनिमभ्युदयाय नः ।
अयोध्यां श्वो गमिष्यामः प्रत्युद्गच्छति तापसः ॥ ७२

ततो विमानादवतीर्य राघवः प्रियासहायः सहजन्मना समम् ।
स्वनामसङ्कीर्तनपूर्वमुच्चकैर्विनीतवेषो मुनिमभ्यवन्दत ॥ ७३

महर्षिणा प्रत्यभिवादनादिना सभाजितो राजसुतः समाहितः ।
प्रसूजनानाञ्च यवीयसोः सुधीरनामयं तं मुनिमन्वयुङ्क्त सः ॥ ७४

समञ्जसं राघव सर्वतः पुरे विभोः पुरस्कृत्य तवैव पादुके ।
स पङ्कदिग्धो जटिलः सवल्कलः प्रतिक्षणं त्वां भरतः प्रतीक्षते ॥७५

तपोमहिम्नाहमवैमि कानने पदे पदे चापतितास्तवापदः ।
तथाप्यभूस्त्वं खलु सत्यसङ्गरः स्वभाव एषः सहजो महात्मनाम् ॥

वने प्रनष्टामपदिश्य मैथिलीं भवान्महत्कष्टमिहासहिष्ट यत् ।
तदेव लोकत्रितयोपकारितां तव प्रकृष्टां विशिनष्टि विष्टपे ॥ ७७

प्रियासखश्श्रान्त इवोपलक्ष्यसे त्वमद्य विश्रम्य ममाश्रमेऽनघ ।
गमिष्यसि श्वस्तव पुष्यसंयुते पुरीमयोध्यां भरतेन योक्ष्यसे ॥ ७८

इतीव भरताग्रजो मुनिवरेण संप्रार्थित-
स्तथेति शिरसा वहंस्तदनुशासनं माल्यवत् ।
कुशाग्रमतिमात्मनः कुशलमग्रतो हारय-
ञ्जवेन मरुदौरसं भरतसन्निधिं प्राहिणोत् ॥ ७९

गुहं गहनगोचरं न्युषितश्रृङ्गिबेरालयं
समेहि कथयानतो ननु सुखप्रवृत्तिं मम ।
गमिष्यसि ततः परं तदुपदिष्टवर्त्मानुगो
मरुत्सुत पताकिनीं भरतशास्यमानां पुरीम् ॥ ८०

कुशाग्रनिभमेधसे मितहितोक्तिसाधीयसे
मदीक्षणदवीयसे हृदयवर्त्मनेदीयसे ।
निवेदय सुवर्चसे कुशलमङ्ग सुश्रेयसे
महागुणवरीयसे मम यवीयसे प्रेयसे ॥ ८१

यथा बलवता बलाद्दशमुखेन सीता हृता
यथा प्रतिनिवर्तिता दशरथोऽपि सन्दर्शितः ।
चतुर्दश समा वने प्रवसतो यदापादितं
निवेदय शुभोदयं निखिलवृत्तमस्मत्कृतम् ॥ ८२

मदागमनशंसिनि त्वयि नृपस्य तस्येङ्गितं
तदीयवचसा तथा वदनवर्चसा सूचितम् ।
विभाव्य यदि मन्यसे सुचिरभुक्तराज्योत्सुकं
स एव वसुधां यथाभिलषितं पुनश्शास्तु ताम् ॥ ८३

अवेहि भरताकृतिं व्यवसितञ्च तत्सङ्गतिं
प्रवृत्तिमपि तन्मतिं त्वरितमेहि मत्सन्निधिम् ।
इतीव स मनोजवं समुपदिश्य वातात्मजं
निनाय रघुनायको दिवसमेकमत्राश्रमे ॥ ८४

तथेति स महामतिर्विहितरामपादानतिः
समाहृतनराकृतिर्विवृतकौतुकव्यापृतिः ।
वियत्पथगतिः सदागतिजवातिगः सन्मुदा
निदेशमिममावहन्गुहसदेशमासेदिवान् ॥ ८५

गुहेन बहुमानितस्तदुपदिष्टवर्त्मानुगो
विलङ्घ्य पथि गोमतीं जनपदाननेकानपि ।
ददर्श कपिकुञ्जरः प्रथितनन्दिपल्ल्यन्तके
श्रमापनुदमाश्रमं कमपि फुल्लवल्लीद्रुमम् ॥ ८६

स तत्र धृतवल्कलं जटिलमम्बुदश्यामलं
भृशं निरशनेन वा कृशमुताल्पपर्णाशनात् ।

पुरोनिहितपादुकं प्रचुरपङ्कदिग्धाङ्गकं
  ददर्श भरतं ज्वलद्धुतवहप्रवेशोद्यतम् ॥ ८७

कृतं कृतमनेन दुर्व्यवसितेन ते भूपते
  यमेवमिह खिद्यसे विजयते स ते पूर्वजः ।
निहत्य दशकन्धरं समुपलभ्य नष्टां प्रियां
  समित्रगणलक्ष्मणो रघुपतिः श्व आयास्यति ॥ ८८

सुधामधुरभाषणं मधुरमृद्विकादूषणं
  मनश्श्रवणतोषणं हृदयखेदसंशोषणम् ।
मरुत्सुतमुखाच्च्युतं समवकर्ण्य कर्णामृतं
  प्रमोदभरितस्तदा स भरतोऽभवन्मूर्छितः ॥ ८९

चिरेण रघुनन्दनः समुपलभ्य संज्ञां पुन-
  र्विलोक्य मरुदौरसं सबहुमानमालिङ्ग्य तम् ।
अपृच्छदिति को भवान्क नु कथं मम ज्यायसः
  कदा तव वनौकसो वद समागमोऽजायत ॥ ९०

सुधामधुसहोदरीं हृदयमोदसन्दायिनीं
  कथां तदभिधायिनीं प्रपिबतो न तृप्तिर्मम ।
प्रियंवद सविस्तरं रघुवरस्य नाथस्य मे
  पुनः कथितयानया शिशिरयन्मनो ह्लादय ॥ ९१

ततो भरतचोदितः समुपवेशितो मारुति-
  र्वशीकृतसरस्वतिः स परिभूतवाचस्पतिः ।
स्फुटाक्षरपदार्थकैः कथयति स्म वाग्गुम्फनै-
  रनूनमनतिक्रमं रघुवरस्य सङ्कीर्तनम् ॥ ९२

आकर्ण्य श्रुतिसुखमाञ्जनेयगीतं कैकेयीवरतनयस्तथार्थवृत्तम् ।
आत्मानं न खलु विवेद पारवश्यादानन्दामृतलहरीनिमग्नचेताः ॥ ९३

रथ्याश्च देवभवनानि परिष्क्रियन्तां
निम्नोन्नताः सरणयोऽपि समीक्रियन्ताम् ।
जोघुष्यतां रघुवरागमनं समन्ता-
द्रामाभिषेककरणानि च संभ्रियन्ताम् ॥ ९४

शत्रुघ्नमेवमनुजं मनुजेन्द्रसूनुरादिश्य मोदभरितो भरतः प्रभाते ।
प्रत्युज्जगाम सह पौरजनैरशेषैरार्यं चिराय विपिनाद्विनिवर्तमानम् ॥

मध्येपथं कमपि स श्रुतवान्पुरस्ताज्जीमूतनिस्तनितवद्ध्वनिमद्ध्वनीनः ।
दूरादलोकत ततो जवनं विमानमायान्तमुच्छ्रितजयध्वजराजमानम् ॥

अन्वास्यमानमनुजेन च सीतयास्मिन्दृष्ट्वाग्रजं स भरतोऽपि चिरायदृष्टम्
मेरुस्थभास्करमिवास्थितपुष्पकं तं देदीप्यमानमहिमातिशयं ववन्दे ॥

रामः प्रमोदभरितो भरतं विमानमारोपयन्सजननीजनपौरवर्गम् ।
आश्लिष्य गाढमभिषिच्य च बाष्पसेकैरङ्के निधाय तमनामयमन्वयुङ्क्त

रामोऽभिवाद्य जननीरथ पौरवृद्धानाभाष्य तत्तदुचितैः सुहितैर्वचोभिः
उच्चैश्च तैर्विजयशब्दमुदीरयद्भिरन्वासितः स भरताश्रममाजगाम ॥

पत्न्या सहानुजवरैर्जननीजनैश्च तस्मादमानगमनाद्धि विमानवर्यात् ।
अत्राश्रमे श्रमविनोदिनि सोऽवतीर्य रामो यथास्वगमनाय तमन्वजानात्

आसीनमासनतले सह पौरवर्गैरन्वास्यमानममरैरिव देवराजम् ।
सीतासहायमतिवेलदयाविधेयं भूयः कृताञ्जलिरिदं भरतो बभाषे ॥

नाथ त्वदीयशुभपादुकयोः प्रभावात्प्राज्यं मयावितमिदं भवदीयराज्यम्
न्यासीकृतं मयि विधेयजने पुनस्तत्प्रत्यर्पयामि रघुपुङ्गव संगृहाण ॥

कोशञ्च गोष्ठमवलोकय वाजिशालामायव्ययौ च चतुरङ्गबलं पुरीं च ।
त्वत्तेजसा द्विगुणितं भवति स्म सर्वं सङ्कोचितः क्षणविहीनतया व्ययस्तु

पौरानिमान्करुणनीरनिधौ निपात्य वर्षाणि राम नव पञ्च वनाटनेन ।
संभाविताऽत्रभवती भवता ममाम्बा सन्तारितः स खलु तत्रभवांश्च तातः

मान्या तवैव ननु केकयराजकन्या धन्याजनीह जननी जननीतिशून्या
कान्या सहेत तदृते वनिता धरण्यां वन्यावनौ श्रमयितुं च विदेहकन्याम्

धन्योऽहमस्मि वनतः पुनरागतस्य
सन्दर्शनेन भवतश्चरितव्रतस्य ।
त्वं सङ्गतोऽसि यदि पूर्वज राज्यलक्ष्म्या
स्याज्जन्म कर्म ननु धन्यतमं मदीयम् ॥ १०६

उर्वीसुतासहचरं त्वयि राजवर्ये दर्वीकरेशशयनप्रतिमानवीर्ये ।
उर्वीधुरं किमिति वोढुमहं प्रगुर्वीं कुर्वीय हेळनकरीं धिषणामगुर्वीम् ॥

राज्यश्रिया सह रघूद्वह सीतयेव त्वां सङ्गतं ननु दिदृक्षति पौरवर्गः ।
सीतामिवात्मपुरुषार्थसमृद्धिसिद्ध्यै राज्यश्रियं प्रतिगृहाण परोपकृत्यै ॥

इति भारतीमनवगीतभारतीमवकर्ण्य कर्णमधुरं रघूद्वहः ।
स तथेति तं प्रतिवदन्यवीयसो हृदये प्रमोदकणिकामजीजनत् ॥

ततो भरतराघवौ परिसमाप्तसत्यव्रता-
वपास्ततरुचीवरौ परिगृहीतपीताम्बरौ ।
सहानुजसुहृद्गणैर्विहितमङ्गळाभ्यञ्जना-
वुभावपि यियासतः सपदि राजधानीं पितुः ॥ ११०

अथो रथमनुत्तमं महितमुष्णरश्मिप्रभं
मणिप्रकरचित्रितं ध्वजवितानसंशोभितम् ।
वनायुजसुयोजितं हितसुमन्त्रसज्जीकृतं
तयावनिजया समं रघुपतिः समारोहति ॥ १११

स्थितोऽग्रजपदाग्रतः स भरतो धृतप्रग्रहो
बभौ स खलु पृष्ठतो भृतसितातपत्रोऽनुजः ।
विभीषणसमन्वितो ह्युभयपार्श्वयोरग्रजं
न्यवीजयदुदीरयञ्जय जयेति रामानुजः ॥ ११२

प्लवङ्गपतिरञ्चितः समधिरुह्य शत्रुञ्जयं
मतङ्गजमुदञ्चितं तमनुजग्मिवान्स्यन्दनम् ।
विहायसि मरुद्गणैर्भुवि महर्षिभिर्ब्राह्मणैः
स्तुतः प्रकृतिभिर्वृतो रघुपतिः पुरीं प्राविशत् ॥ ११३

अशोभत पुरी च सा रुचिररङ्गवल्ल्यञ्चिता
परिष्कृतचतुष्पथा ध्वजसमूहसंशोभिता ।
प्रहृष्टजनसङ्कुला प्रसृतरम्यतौर्यत्रिका
वनादिह रघूद्वहे सपदि गाहमाने पुनः ॥ ११४

प्रविश्य भवनं पितुस्तदनु धर्मपत्न्या समं
प्रणम्य जननीजनान्गुरुजनानपि ब्राह्मणान् ।
ततो निजनिकेतनं नयनलोभनीयं स्वयं
न्यदर्शयत राघवो हरिवराय मित्राय सः ॥ ११५

अथ भरतनिदेशान्मारुतिप्रेष्ठवीरैरसदृशगतिशीलैर्वानराणां विनेता ।
जलनिधिसुरधुन्याद्युद्धृतं हेमकुम्भै रघुवरमभिषेक्तुं ह्यानिनायाच्छमम्भः



प्राचीनैरथ रघुवंशसार्वभौमैराक्रान्ते विभुमुपवेश्य भद्रपीठे ।
प्राचीनं शुभदमनर्घमस्य मौलौ राजार्कं मकुटमणिं न्यधाद्वसिष्ठः ॥
कौसल्याहृदि शिशिरायितं पवित्रं शत्रुघ्नः सपदि दधे सितातपत्रम् ।
सुग्रीवो दशमुखसोदरश्च सोऽन्यौ राजार्कौ रघुवरपार्श्वयोर्दधाते ॥

स. १४, श्लो. १२०, १२१, पृ. १५९

पट्टाभिषेककरणेषु च सम्भृतेषु सभ्येषु सत्सु च सुहृत्सु समागतेषु ।
सर्वत्र तूर्यनिनदेषु विजृम्भितेषु सर्वेषु मोदभरितेषु च कोसलेषु ॥

इक्ष्वाकुसन्ततिचिरन्तनसंप्रदायविद्वान्पितामहसुतो भगवान्वसिष्ठः ।
जाबालिकाश्यपमुखा अपि संयमीन्द्रा वेदाङ्गवेदनिगमान्तविदश्च विप्राः

श्रीरामं श्रितहितकाममिन्दुशीतं सौन्दर्यादतिशतमन्मथं ससीतम् ।
कल्याणे कनकमयासने निषण्णं पुण्याहोदककलशैस्तमभ्यषिञ्चन् ॥

प्राचीनैरथ रघुवंशसार्वभौमैराक्रान्ते विभुमुपवेश्य भद्रपीठे ।
प्राचीनं शुभदमनर्घमस्य मौळौ राजाङ्कं मकुटमणिं न्यधाद्वसिष्ठः ॥

कौसल्याहृदि शिशिरायितं पवित्रं शत्रुघ्नः सपदि दधे सितातपत्रम् ।
सुग्रीवो दशमुखसोदरश्च सोऽन्यौ राजाङ्कौ रघुवरपार्श्वयोर्दधाते ॥

तत्काले स्रजमुपदीकृतां मघोना सौवर्णीं ज्वलन इव श्रिया ज्वलन्तीम् ।
प्रायच्छन्नवमणिकल्पितां च यष्टिं रामाय त्रिदशहितङ्कराय वायुः ॥

जम्भारिः सपदि ववर्ष पुष्पवर्षं संरम्भान्नयनसुखं ननर्त रम्भा ।
गन्धर्वाः श्रवणसुखं जगुश्च गीतं भिन्दाना गगनतलं ननाद भेरी ॥

संयोगे मनुजवरस्य राज्यलक्ष्म्या सैषाहो समजनि मेदिनी ससस्या ।
सञ्जाताः प्रचुरफलाः समस्तवृक्षाः सर्वर्तुप्रसवकदम्बकैः सगन्धाः ॥

विप्रेभ्यः स रघुवरो गवां सहस्रं प्रायच्छद्वसुवसनानि भूषणानि ।
पर्याप्तं यदभिमतं तदप्ययच्छद्राजाङ्कत्रयमपहाय याचकेभ्यः ॥ १२५

प्रत्यग्रैर्वसनविभूषणैरनर्घैः सुग्रीवप्रमुखवलीमुखानमंस्त ।
सौहार्दाद्भरतमिवारिबान्धवं तं त्वालिङ्गन्नशिथिलमाद्रियाञ्चकार ॥

लोकेऽस्मिन्किमिति हनूमते प्रदातुं श्रीरामे मनसि भृशं प्रदूयमाने ।
ग्रैवेयं प्रियमपनीय रामदत्तं वैदेही स्वयमुपदीचकार तस्मै ॥ १२७

रामाभिषेकमवलोकितुमागतानां तद्दिव्यमङ्गळतनुच्छविमोहितानाम्
स्त्रीणां नृणामपि सुरासुरवानराणां का वा यथास्वगमनार्थमियेष को वा

आपृच्छय तं पवनसूनुमृते कथञ्चिद्यातेषु यातुनृपतिप्रमुखेषु तेषु ।
सौमित्रिणा समवधीरितयौवराज्ये सीतासखो भरतमाश्रवमभ्यषिञ्चत्

इति पितुरनुभूतं सत्परित्राणहेतो-
निजसुखनिरपेक्षं प्राज्यमासाद्य राज्यम् ।
सुरनरपरितोषं पौण्डरीकाश्वमेधै-
र्विधिवदसकृदिष्ट्वा यायजूकः सजायः ॥ १३०

शमितदनुजमूलः सत्परित्राणशीलः
शमदमसमुदायश्शान्तसर्वान्तरायः ।
प्रणतजनशरण्यः सुन्दरानन्दपण्यः
स जयति जगतीशो जानकीजीवितेशः ॥ १३१

सुन्दरमेतत्काव्यं सुन्दररामायणाख्यमनवद्यम् ।
सुन्दरकविप्रणीतं सुन्दर्यानन्दसम्पदे जयतु ॥ १३२

इति श्रीमद्वाधूलकुलजलधिकौस्तुभस्य श्रीमन्मार्गसहायशास्त्रिणस्तनू-
जस्य श्रीमत्सुब्बाम्बागर्भशुक्तिमुक्ताफलस्य श्रीसुन्दरेश्वरस्य
कृतौ सुन्दररामायणकाव्ये
चतुर्दशः सर्गः

**समाप्तश्चायं ग्रन्थः**

॥ श्रीः ॥

# ॥ सतीविलसितम् ॥

अङ्गनामणिमयार्धविग्रहानङ्गशासन हलायुधस्तुत ।
गाङ्गभङ्गलसदुत्तमाङ्ग मे मङ्गलाय भव सङ्गमेश्वर ॥

## ॥ पूर्वभागः ॥

परस्परवियोगार्तिभीताविव परस्परम् ।
समाश्लिष्टतनू वन्दे प्रपञ्चादिमदम्पती ॥ १

रसने यदि ते रसज्ञता सरसान्वर्णय भो सतीगुणान् ।
सकृदेव निपीय यानहो विमुखी स्याद्भवती सुधारसे ॥ २

सुकृताय परं च कल्पते सुचरित्रागुणवर्णनं तव ।
गुणगर्धिनि तत्कथां सुधामधुरां गाय मनःकुतूहलाम् ॥ ३

काञ्चीदेशे कमलनगरी विश्रुता काचिदास्ते
तामध्यास्ते रुचिर इति कोऽप्यग्रजन्मा गुणाढ्यः ।
पद्मा नाम प्रतिरतिरिव प्राप्ततारुण्यलक्ष्मीः
साध्वी तस्योल्लसति दयिता चारुचामीकराभा ॥ ४

भर्तारं सा विविधवरिवस्यादिभिः प्रीणयन्ती
छायेवार्कं प्रियमनुगता यत्र यत्रापि यान्तम् ।

साध्वीं सोऽपि प्रियसहचरीमादरादीप्सितार्थै-
रास्ते रात्रिन्दिवमतितरां हर्षयुक्तां वितन्वन् ॥ ५

कान्ता सा न प्रियतममृते स्वादु वस्तूनि भुङ्क्ते
सोऽपि स्निग्धां सुखयितुमलं न प्रियामन्तरेण ।
जायापत्योरयुगमनसोस्तन्वतोर्जीवयात्रा-
मेवं वर्षा दश विगलितास्तूर्णमेका निशेव ॥ ६

कदाचिदालोक्य पतिः स्वकान्तामनल्पचिन्ताकुलितान्तरङ्गाम् ।
विज्ञातुकामस्तदलीकहेतुं मिथः समाहूय जगाद वाक्यम् ॥ ७

दयिते वदने विवर्णता हृदि ते कामनणीयसीं व्यथाम् ।
विवृणोति न बुध्यते मया वद मे विप्रियकारणं तव ॥ ८

किमकारि तवाप्रियं मया यदि वा तन्मनसापि चिन्तितम् ।
अपराधलवं कमन्यथा दयिते भाविनि शङ्कसे मयि ॥ ९

बलवत्यपि ते शिरोव्यथा किमु वान्यद्व्यथितं तवाङ्गकम् ।
वद तन्वि विनिश्चितं द्रुतं प्रयतेऽहं प्रतिकर्तुमञ्जसा ॥ १०

परुषाणि किमाह कोपना जननी दुर्वचनानि पेशले ।
अत एव मृणालकोमलं हृदयं ताम्यति तावकं किमु ॥ ११

यदि मां त्वदधीनमानसं परदारेषु रतं विशङ्कसे ।
मनसि प्रथमं त्वया हृते परकान्तासु कथं रतिं लभे ॥ १२

जनिता किमु ते विमानना परपुंसा दयितानुरागिणि ।
तदपि त्वयि नैव सम्भवेदुरगीं चुम्बति को जिजीविषुः ॥ १३

शरदिन्दुरविन्दसुन्दरं दरहासाञ्चितमञ्जुलाधरम् ।
ननु कुन्दरदं तवाननं दयिते सम्प्रति चिन्तयाविलम् ॥ १४

शशिकान्तनितान्तकान्तिमत्तव कान्ते वपुरार्तितान्तितम् ।
सितकैतकगर्भपत्रवन्ननु ते गण्डतलं विपाण्डुरम् ॥ १५

नितरां विधुरामनल्पया सुभगे त्वामवलोक्य चिन्तया ।
ज्वलितानलचुम्बितं यथा व्यथमानं हि ममापि मानसम् ॥ १६

यदि ते न हि कोपकारणं यदि वा साध्वि न मानसी व्यथा ।
कलमञ्जुलभाषणेन मां कथमानन्दयितुं विलम्बसे ॥ १७

इति सा दयितेन भाषिता समदुःखाकुलितान्तरात्मना ।
अतिदुःसहदुःखविक्लवा पतिमूचे वचनं पतिव्रता ॥ १८

अयि जीवितनाथ शङ्कितं भवता मे यदलीककारणम् ।
न हि तत्सकलं प्रसज्जते ननु कल्याणगुणाऽसि मां प्रति ॥ १९

ननु मां त्वदधीनजीवितामिह संस्थाप्य सखे गमिष्यसि ।
अतिदूरतरं विदेशमित्यवकर्ण्याकुलितं हि मे मनः ॥ २०

भवता सह जीवितेश मामनुगन्तुं सहधर्मचारिणीम् ।
दययानुगृहाण कौमुदी न हिमांशुं खलु जातु मुञ्चति ॥ २१

शशिना रहितेव शर्वरी जलदेनेव विनाचिरप्रभा ।
ललनापि सती पतिं विना न हि शोभामुपयाति जात्वपि ॥ २२

ननु चन्द्रमती च जानकी दमयन्ती च पुरा बहुश्रुताः ।
अपि कृच्छ्रगतं प्रवासिनं पतिमेवानुगताः पतिव्रताः ॥ २३

विजने जनसङ्कुले वने नगरे वा स जनः सुखी भवेत् ।
समदुःखसुखेन यो युतः सुहृदा द्वन्द्वचराविव द्विजौ ॥ २४

सुहृदा वियुतस्य पत्तनं सजनं वा विजनं वनं भवेत् ।
दयितेन युतस्य काननं विजनं वा पुटभेदनं भवेत् ॥ २५

विरहं तव सोढुमक्षमासितपक्षेन्दुकलेव मे तनुः ।
तनुतां समुपैष्यति क्रमादपि चान्ते हृदि भावनीयताम् ॥ २६

हृदयङ्गम नौ वपुर्द्वयं विधिनाकारि मनस्तु केवलम् ।
वपुषोरुभयोः समं सतोः क्षममेकत्र सुखेन जीवितुम् ॥ २७

त्वयि नर्मसखे प्रवासगे भवदङ्काश्रयणीं विमुच्य माम् ।
सरसालपितेन केन वा कथमात्मानमहं विनोदये ॥ २८

परिहृत्य विदेशगामिनि त्वयि ते बाहुलतोपधायिनीम् ।
अविनोदविदीर्घयामिनीं कथमेका गमयामि शर्वरीम् ॥ २९

प्रणयेन तवाङ्कसंस्थिता तव कण्ठार्पितबाहुबन्धना ।
भवता नु कदा समं सखे सरसालापसुखं पुनर्लभे ॥ ३०

हृदयेश विदेशवर्तिनस्तव मार्गश्रमितस्य मां विना ।
पदसंवहनादिकर्मणा परिचर्या क्रियते कयान्यया ॥ ३१

पतिरेव धनं पतिर्बलं पतिरेवाभरणं च चारुता ।
पतिरेव परं हि दैवतं पतिसेवा परमं व्रतं खलु ॥ ३२

क्षणमात्रमपि त्वया विना न सहे धारयितुं हि जीवितम् ।
बहुना वचनेन किं सखे न विमुञ्चामि तवाङ्घ्रिपङ्कजम् ॥ ३३

इति साध्व्यनुरूपया गिरा पतिपादाङ्गुलिपातितेक्षणा ।
त्रपयावनताननना सती पतिमुक्त्वा विरराम सुन्दरी ॥ ३४

प्रियया समुदीरितं प्रियः स समाकर्ण्य मनःप्रियं वचः ।
अनलं प्रतिभाषितुं प्रियामपरिच्छेदविलोलमानसः ॥ ३५

अथ तामविदूरवर्तिनीमुपवेश्याङ्कतले मनस्विनीम् ।
परिरभ्य दृढं मनःप्रियामनुनेतुं स पतिः प्रचक्रमे ॥ ३६

दयिते वचनं त्वदीरितं ननु सर्वेन्द्रियमोहनं हितम् ।
अबला पतिभक्तिगर्विता त्वदृतेऽन्यालपितुं न कल्पते ॥ ३७

वचनं तव युक्तिसंहितं बहुमानार्हमवैमि हे प्रिये ।
गुणवत्सु गुणा हि केवलं न च लिङ्गं न वयः समीक्ष्यते ॥ ३८

ननु लौकिककार्यगौरवात्सखि यास्यामि विदेशमञ्जसा ।
क्षणकालमिमं सहस्व मे निवसन्ती विरहं पितुर्गृहे ॥ ३९

न सहेय विमुच्य वल्लभे सुचिरं त्वामसहायिनीमिह ।
दयितामिव चक्रनामकः क्षणकालीनवियोगमण्डजः ॥ ४०

अविलम्बितमेव मा शुचः समुपैष्यामि तवान्तिकं प्रिये ।
घनराजिमलीमसक्षपामिव वर्षापगमे शरच्छशी ॥ ४१

ननु मासयुगं सहस्व मे विरहं प्रावृषि कान्तविग्रहे ।
घननादविडम्बिकेकया विहरन्ती गृहबर्हिकान्तया ॥ ४२

कलवागनुवादनोत्सुकां तव संवर्धितगेहशारिकाम् ।
उपलालय मञ्जुभाषणैर्विरहं मे सखि विस्मरिष्यसि ॥ ४३

तनुगात्रि शिरीषकोमलं वपुरायासयितुं विचिन्तय ।
अपि निश्वसितैरशीतलैर्वदनं म्लापयितुं न चार्हसि ॥ ४४

अथ वा सह ते सखीजनैर्बलिपुष्पापचयं वितन्वती ।
गमयाशु दिवा तथा निशां कथयन्ती मधुमाधुरीः कथाः ॥ ४५

बिसतन्तुतनीयसी तनुर्न सहेतातपखेदमध्वनि ।
अनुयापयितुं न रोचते सखि मे त्वामत एव नान्यथा ॥ ४६

शृणु मे हितमिच्छतः प्रिये वचनं प्रेमभरप्रचोदितम् ।
दयितानुगमे विनिश्चितं हृदयं सम्प्रति ते निवारय ॥ ४७

इति तामनुनीय सुन्दरीमरविन्दायतकान्तलोचनाम् ।
परिरभ्य पतिः पुनः प्रियां गमनायानुमतिं स्म याचते ॥ ४८

अथ निशम्य सती हृदयेशितुर्वचनमश्रुनिमग्नकनीनिका ।
दयितवाचमतिक्रमितुं न सा प्रभवति स्म हि भग्नमनोरथा ॥ ४९

नयनवारिविमृष्टदृगञ्जनाशिशिरनिश्वसितग्लपिताधरा ।
विरहदुःखनिरुद्धकलस्वरा पुनरुवाच पतिं पतिदेवता ॥ ५०

प्राणनाथ मयि भो न कदापि व्याहता खलु भवेत्प्रभुता ते ।
जीवति त्वयि हि वर्षसहस्रं जीवितं मम विभो त्वदधीनम् ॥ ५१

किं नु मामिह विमुच्य गते त्वय्यन्यदेशमपि जीवितनाथ ।
मन्मनस्त्वयि निबद्धमिदं त्वद्दर्शनावधि पुनर्न धिनोति ॥ ५२

मां विहाय तव नाथ मनश्चेदन्यदेशगमनेऽभिनिविष्टम् ।
साधयाशु पुनरागमनाय स्वस्ति ते वितरताज्जगदीशः ॥ ५३

इत्युक्त्वा पतिमथ सा तदूरुदेशादुत्थाय प्रियतममङ्गलाय साध्वी ।
पूतात्मा शिरसि धृताञ्जलिर्नताङ्गी प्रस्तोतुं पतिकुलदेवतां प्रवृत्ता ॥

स्वच्छा मे यदि भवतीह भर्तृभक्तिश्चारित्रं यदि विमलं तथा पुनः स्यात् ।
मां हित्वा जिगमिषुमन्यदेशमार्यं प्राणेशं पतिकुलदेवते त्वमव्याः ॥ ५५

एकाकी पतिकुलदेवते विदेशं प्रस्थातुं सपदि विनिश्चितार्थबुद्धेः ।
कारुण्यं यदि मयि तेऽनपायि चास्मिन्भर्तुर्मे भगवति मङ्गलानि देयाः ॥

भर्ता मे बहिरसवः शरीरबद्धास्तं हित्वा न हि भुवने जिजीविषा मे ।
यावन्मे विरहबलिस्तनुर्न भूयात्तावत्सङ्गमयितुमर्हसि प्रियेण ॥ ५७

स्तुत्वैवं पतिकुलदेवतां नताङ्गी प्राणेशप्रपदयुगं प्रणम्य साध्वी ।
बाष्पाम्भः कथमपि सन्निरुध्य बाला भूयोऽपि प्रियतममाह दीनवाचा ॥

त्वय्युत्कण्ठितचित्तायास्त्वयि दूरं गते सति ।
विनोदयितुमात्मानमभिज्ञानं प्रदेहि मे ॥ ५९

त्वदीयकुशलोदन्तपत्रिकां प्रत्यहं लिख ।
ययाप्यायितचित्ताहं धारयिष्यामि जीवितम् ॥ ६०

दवीयसीमपि दृशोस्तव नेदीयसीं हृदः ।
प्रेयसीमर्हसि स्मर्तुमश्रान्ताधिगरीयसीम् ॥ ६१

स पतिरसकृदेवं कान्तया प्रार्थितः स-
न्सशपथमथ तस्याः सम्प्रतिश्रुत्य सर्वम् ।
प्रतिकृतिमादिशत्स्वां पत्रविन्यस्तरूपां
निजविरहभविष्यत्खेदमुद्धारयन्तीम् ॥ ६२

पुनरपि हृदयेशो गाढमालिङ्ग्य कान्ता-
मधरमधुरमाध्वीं सादरं सेवमानः ।
सरसमधुरवाचा तां समापृच्छय साध्वीं
कथमपि विससर्ज क्षिप्रमायातुकामः ॥ ६३

इति श्रीमद्वाधूलकुलजलधिकौस्तुभस्य श्रीमन्मार्गसहायशास्त्रिणस्तनू-
जस्य श्रीमत्सुब्बाम्बागर्भशुक्तिमुक्ताफलस्य श्रीसुन्दरेश्वरस्य
कृतौ सतीविलसिते
पूर्वभागः

## ॥ अथोत्तरभागः ॥

प्रेयसीमथ विमुच्य वल्लभे दूरदेशमचिरादुपेयुषि ।
भर्तुरागमनकालकाङ्क्षिणी वासराणि गणयाम्बभूव सा ॥ १

दूरदेशगमनाय वल्लभो यावदैहत विहाय गेहिनीम् ।
तावदेव रमणीमणेर्मनः प्राविशद्विरहदुःखभीरुता ॥ २

लङ्घिते पतिकृतावधौ सती स्वान्तिकं पुनरनागते प्रिये ।
जीवितेशविरहव्यथाकुला सा न शर्म लभते सुमध्यमा ॥ ३

सा तदेकहृदया पतिव्रता चान्यवस्तुविनिवृत्तमानसा ।
चिन्तया विधुरितानना सती दूयतेऽधिकतरं दिवानिशम् ॥ ४

पत्यनागमनकारणं तदा सा बुभुत्सुरतिखिन्नमानसा ।
भाविनी तमधिकृत्य पत्रिकामेवमादिवचनैरलीलिखत् ॥ ५

दूरदेशगमनाह्नि त्वया जीवितेश यदभाषि मां प्रति ।
अस्ति चेत्स्मृतिपथे तवेदृशी वृत्तिराश्रितपराङ्मुखी कुतः ॥ ६

कैतवेन गदितं तु वेद्मि तद्यत्सुधामधुरया गिरात्थ माम् ।
नाथ मां भवदधीनजीवितां किं प्रतारयितुमौचिती तव ॥ ७

ब्रह्मसृष्टिषु निसर्गसौहृदं तिर्यगादिमिथुनेऽपि विश्रुतम् ।
मय्यनागसि तु वीतरागता नूनमद्भुतकरी तवेदृशी ॥ ८

मा शुचः प्रियतमेऽविलम्बितं त्वामुपैमि पुनरेव नाथ माम् ।
इत्यवादि खलु सान्त्वया गिरा तत्तदैव किमु विस्मृतं त्वया ॥ ९

त्यक्तकज्जलतया विनिर्मलं वीतावभ्रमतया विनिश्चलम् ।
मद्विलोचनमुपोषितं सखे लिप्सति स्म तव दर्शनामृतम् ॥ १०

गन्धसारकरकेन्दुशीतले तावकीनपरिरम्भणेऽसति ।
तिग्मभानुहृतनीरपल्वले म्लायतीव बिसिनी वपुर्लता ॥ ११

त्वत्प्रवृत्तिमनवाप्य मामकं दूयते स्म हृदयं दिवानिशम् ।
नाथ मां परवतीं तवाधुना विप्रलब्धुमुचितं किमाश्रिताम् ॥ १२

उक्तवाक्यपरिपालनं सतामाश्रितेषु सहजो भवादृशाम् ।
शोभनः खलु गुणो हि दृश्यते मत्कृते परिणतोऽयमन्यथा ॥ १३

त्वां विना हृदयनाथ मामिहाशीतनिश्वासितशोषिताधराम् ।
किं नु न स्मरसि किं तव प्रियामश्रुपूरकलुषीकृतेक्षणाम् ॥ १४

मय्यनागसि कमागसो लवं मानसे हृदयनाथ शङ्कसे ।
यत्तवाङ्कसुखितामनारतं न स्मरस्यपि सकृत्तव प्रियाम् ॥ १५

कृत्यमप्रियकरं कदापि ते चिन्तितं किमनभिज्ञया मया ।
एवमस्ति यदि मन्तुमीदृशं क्षन्तुमर्हसि कृतं प्रमादतः ॥ १६

भूषणाय वसनाय वा तथा काञ्चनाय किमु पीडितो मया ।
भूषणे न वसने न काञ्चने जातु मे रतिरिति स्फुटं तव ॥ १७

पीतमम्बरमनर्घभूषणं काञ्चनं त्वमिति निश्चयो मम ।
जीवितस्वमपि सर्वसम्पदो न्यूनता न तव सङ्गमान्मम ॥ १८

सर्वमेतदपि सम्प्रतीव मे लुप्तमीक्षणपथेऽसति त्वयि ।
दर्शनं सदय देहि मे चिराद्विप्रयोगविधुरामवेहि माम् ॥ १९

कान्त ते विरहपीडिता तनुस्तान्तिमेति हि नितान्तपेशला ।
शान्तिमेष्यति कदा तु सा पुनः प्रान्तमाप्य तव कान्तदर्शन ॥ २०

यापयाम्यपि कथं त्वया विना कालमुत्कलिकयाकुलीकृता ।
अप्युपेक्षितुमितः परं तवायुक्तमाशु नय मां त्वदन्तिकम् ॥ २१

प्रीतिरस्ति यदि मय्यकैतवा हीदृशी तव कुतस्तटस्थता ।
मां परीक्षितुमियं तु चेदलं कान्त विद्धि पतिदेवतामिमाम् ॥ २२

त्वत्समागमनलालसा पुनस्त्वद्विलोकनसमुत्सुका सखे ।
शैशिरीर्विरहिणीवधूमनस्तापिनीरिह नयामि यामिनीः ॥ २३

मेघनिस्तनितकम्पिता मुहुर्धूपिता च शिखिमञ्जुलारवैः ।
दीपिता च तटिता तमस्विनीर्वार्षिकीरगमयं शनैः शनैः ॥ २४

किं नु वच्मि सचिव त्वया विना शारदीषु रजनीषु मद्दशाम् ।
वारिताः कथमपि प्रसारिता यामिनीविटकलङ्किनः कराः ॥ २५

ईदृशीमपि दशामुपेयुषीमाश्रितामहह मामुपेक्षसे ।
त्वं निसर्गसरलो दयार्द्रहृन्मत्कृते किमदयोऽसि साम्प्रतम् ॥ २६

त्वां विभो किमघहेतवेऽथ वा मूढधीरहमुपालभेऽधुना ।
मद्विधेरननुकूलतैव नौ विप्रयोगमकरोदहो बत ॥ २७

पूर्वजन्मनि मयानभिज्ञया कीदृशं नु दुरितं समार्जितम् ।
यद्विपाक्तिरधुना रुणद्धि मा त्वत्समागमसमुत्सुकामिमाम् ॥ २८

यानवद्यचरितं महाशयं लब्धवर्णमनरालमानसम् ।
वल्लभं क्षणमवीक्ष्य जीवितं धारयामि धिगधन्यतां मम ॥ २९

जीवितेशमनवेक्ष्य मे मनो मुह्यदन्धतमसे मुहुर्मुहुः ।
निर्वृतिं न लभतेऽथ वा धृतिं यावदक्षिपथमेष्यति प्रियः ॥ ३०

एवमश्महृदयप्रभेदनैः सारचय्य वचनैरपांसुला ।
प्राहिणोत्प्रियतराय पत्रिकामञ्जसा प्रतिवचःश्रवोत्सुका ॥ ३१

सा निनाय दिवसानि कानिचिन्मानिनी पतिसमागमैषिणी ।
केकिनीव नवनीरदागमं रोहिणीव शशिना समागमम् ॥ ३२

सन्ततं मनसि तन्वती सती कान्तमेव कमनीयविग्रहा ।
सान्त्ववादिभिरियं सखीजनैः स्वान्तमाकलयते न भाषणे ॥ ३३

स्मर्यते खलु तदेकतानया गेहकृत्यकणिकापि नो तया ।
का कथान्यविषये पुनस्तदा सा हि शून्यहृदया बभूव ह ॥ ३४

चित्रमेतदपि निर्निमेषया नान्वभावि पतिदर्शनामृतम् ।
चारुताविजितमेनका च सा भूसुरेन्द्रसहचारिणी न किम् ॥ ३५

जीवितेशविरहव्यथातुरा सा कृशा च शरकाण्डपाण्डुरा ।
भोजने न शयने सखीजनैर्भाषणे रतिमवाप भूषणे ॥ ३६

श्रूयेत यदि कदापि कस्यचित्पादविन्यसननिस्वनस्तया ।
भर्तुरागमनशङ्कया बहिः प्रेत्य मोघमवलोक्य खिद्यते ॥ ३७

वामपाणितलनीतमस्तका सम्प्रति क्षितितले निषेदुषी ।
यामिनीषु विनिमील्य लोचने सा विडम्बयति सुप्तिमुत्तमा ॥ ३८

स्नेहगौरववशात्प्रिये तदा सा प्रतिक्षणमनार्यशङ्कया ।
व्याकुला कुशलमिष्टदैवतं नाथति स्वपतये पतिव्रता ॥ ३९

जीवितेशसुखहेतवे परं जीवितं मम विधातृनिर्मितम् ।
न ह्युपेक्ष्यमिति तन्वती मतिं जीवभारमुररीकरोति सा ॥* ४

इति श्रीमद्वाधूलकुलजलधिकौस्तुभस्य श्रीमन्मार्गसहायशास्त्रिणस्तनू-
जस्य श्रीमत्सुब्बाम्बागर्भशुक्तिमुक्ताफलस्य श्रीसुन्दरेश्वरस्य
कृतौसतीविलसिते
उत्तरभागः



* एतावानेवोपलब्धो ग्रन्थः ।